# रुक्मिणीहरणम् ।

BIHAR 13 S N

—————

महामहोपाध्याय-भारताचार्य-
महाकवि-
श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्य-
प्रणीतम् ।

—————

व्याकरण-काव्य-पुराणतीर्थ-साहित्यविनोद-
श्रीहेमचन्द्रतर्कवागीशभट्टाचार्य्य-
प्रणीतया विपिलाख्यया टीकया तत्कृतेनान्वयेन
बङ्गानुवादेन च सहितम् ।



तृतीयसंस्करणम् ।

१८६४ शकाब्दीयपौषस्य चतुर्विंशदिवसे ।

मूल्यम् २॥० सार्द्धरजतमुद्राद्वयम् ।

४१ सव्यकदेवलेनस्थसिद्धान्तविद्यालयात्
श्रीहेमचन्द्रतर्कवागीश-व्याकरण-काव्य-पुराणतीर्थ-
साहित्यविनोदभट्टाचार्य्येण
प्रकाशितम् ।

कलिकाता ४१ संख्यकदेवलेनस्य
सिद्धान्तयन्त्रे
श्रीहेमचन्द्रभट्टाचार्य्येण मुद्रितम् ।

# द्वितीयसंस्करणस्य निवेदनम्

अहो लोकचरित्रनिष्णाता विद्वांसः ! विदन्त्येव भवन्तो यत्, लोकेऽस्मिन् त्रिविधा लोकाः स्वपक्षा विपक्षा उदासीनाश्चेति। तत्र जीवतो ग्रन्थकारस्य प्रत्यक्षमेव स्वपक्षतः सोत्कण्ठ इव सोत्प्रास इव सबाध इव सव्यय इव च कादाचित्को विरलः प्रशंसावादः ; परोक्षन्तु सभय इव सानन्द इव सप्रसाद इव च प्रचुरतर एवापवादः ; विपक्षतस्तु प्रत्यक्षञ्च परोक्षञ्च सानन्द एव सदम्भ एव सगर्जन एव च सभर्त्सनं मुक्तकण्ठश्च प्रायिकश्चोभौ निन्दावादः ; अनुकूलप्रतिकूलपक्षनिरपेक्षा-दुदासीनाच्च सानुसन्धान एव सविवेक एव निर्बाध एव निःसङ्कोच एव च स्थानोपयोगी प्रायिकः सुन्दरः प्रशंसावादः ; सदुःख इव सानुकम्प इव सविषाद इव च कादाचित्को निन्दावादः प्रादुर्भवति। अत्यन्तो विचित्रं नाम लोकचरित्रम्। तेन च जीवतामिह ग्रन्थकर्तॄणां विद्वत्पदमध्यासीनो दवीयानुदासीन एव केवलमाश्वासस्थानम्। एतच्च वयमाकैशोराद्-यशोलिप्समाना मनःकौपीनार्थं स्वार्थयमानाश्चिरमेवानुभवामः। इत-रस्मादुदासीन एव जीवतो ग्रन्थकारस्य परमो बन्धुः। येन हि, स्वपक्षो विना मूल्यमेव ग्रन्थान् याचते, तददाने चाक्रोशति ; विपक्षस्तु मूल्यव्यतिरेकेण ग्रन्थदानेऽपि तत्पठनसमयव्ययक्षतिपूरणाय ग्रन्थकारमेव निर्भर्त्सति ; भगवानुदासीनस्तु विना मूल्यं ग्रन्थं न याचते, तथा दानेन तु नितरामेव तृप्यति, भारग्रातीतानाशिषश्च प्रयुङ्क्ते। यतः तु भगवदनुग्रहाद्वा दैवानुकूल्याद्वा ग्रन्थसौष्ठवाद्वा स्वपक्षाश्च विपक्षाश्च तथैवोदासीनाश्च सादरं गृह्णन्त संवत्सरेणैकेनैव प्रथमसंस्कृतं

सविस्तरोद्धरणं निःशेषितवन्तः। अतएव द्वितीयवारप्रकाशोद्यमः। तत्र चेदानीं युद्धे व्यापृयमाणा दूरे वर्त्तमाना अपि स्वयमाकुलीभवन्तः परानप्याकुलीकुर्वन्ति। तेन च कागज पत्रादीनां सुबहुलीभूतं मूल्यम्, खाद्यसंग्रहेष्वेव च निःशेषं जातं निःस्वानां सर्वस्वम्, प्रायेण च निःस्वा एव संस्कृतविद्यार्थिन इत्यादिकमालोचयता तेषां शिक्षार्थिनां विशेषसुविधाविधानाय सम्प्रति वक्तियोद्धरणस्य पाठ्यांश-मात्रं प्रकाशितम्। आशास्महे यद्वारान्तरे अन्वयटीकानुवादसम्बलितं सम्पूर्णमेव प्रकाशयितव्यमिति।

१८६९ शकाब्दीयपौषफाल्गुन- आषाढीयहावि प्रदिवसीयम्। — चिरविधेयस्य प्रकाशकस्य।

* * * * * *

## तृतीयसंस्करणस्य निवेदनम्।

अस्तु। गुणग्राहिणः साधुदर्शिनो ग्राहकमहोदयाः। वर्त्तमान-समये कागज प्रभृति धारणातीतमूल्याधिकार्येऽपि मुद्रणव्ययादीनाञ्च नितान्तबहुलत्वेऽपि च भवतां यथासम्भवसुलभसुविधाविधानाय यत्-किञ्चिदेव मूल्यं वर्द्धितमतः क्षन्तव्यम्। असम्भवव्ययबाहुल्यसम्भावनया च द्वितीयसंस्करणमिवास्मिन्नपि सम्पूर्णग्रन्थे अन्वयटीकादिकं न निबद्धमिति।

१८६४ शकाब्दीयपौषस्य नवमि प्रदिवसीयम्। — चिरविधेयस्य प्रकाशकस्य।

# रुक्मिणीहरणम् ।

---

## प्रथमः सर्गः ।

---

शिवः शिवापदुतलगः शवोऽपि सन्
भवन्महाम्बरमपि यो निरम्बरः ।
रमार्द्धभाक् तनुरपि मारमारकः
स वो भवो भवतु विभुर्विभूतिदः ॥१॥

---

अन्वय,—य शिवापदतलग शव सन्नपि शिव, य महाम्बर भवन्नपि निरम्बर, यश्च रमार्द्धभाक् तनुरपि मारमारक, स विभुर्भव व विभूतिद भवतु ॥१॥

नमो गणेशाय ।

धरां धरति यः सदा स तव वासुकिर्भूषणं
भिनत्ति गिरिमेव या सुरधुनी च सा मूर्द्धनि ।
जगज्जनजनन्यपि त्रिजगदाश्रया वक्षसि
प्रभो ! त्यज न मे मनोऽस्थगणेश्वर स्वपादाम्बुजात् ॥

महाकवेर्महाकाव्य-व्याचिख्यासाल्पया धिया ।
सिन्धोरिव प्रकाशेच्छा ज्योतिरिङ्गणरोचिषा ॥

अथ तत्रभवान् महाकविः * श्रीहरिदाससिद्धान्तवागीशः "काव्यं यशसेऽर्थकृते" इत्याद्यालङ्कारिकवचनप्रामाण्यमङ्गीकुर्वन् यशोलिप्सया रुक्मिणीहरणं नाम महाकाव्यं चिकीर्षन् सम्भाव्यमानमन्तरायमन्तरेण तत्परिसमाप्तिं विधित्सन् "सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥" इत्यपरालङ्कारिकोक्तयोर्नमस्क्रियावस्तुनिर्देशयोर्महाकाव्यान्तरेषु दर्शनात् परानुकरणं परिजिहीर्षन् परिशेषादाशीर्वादपदेनाभीष्टदेवताकरणरूपमङ्गलमाचरति शिव इति। प्रथमं देवतानामोच्चारणेन गणादिशुद्धिरवधेया। यः शिवायाः कालिकायाः पदतलगः चरणाधीनवर्त्ती शवः सर्वानभीष्टविषयत्वादमङ्गलरूपो निष्प्राणदेहः सन्नपि, शिवः मङ्गलरूप इति विरोधः; महादेव इति च तत्समाधानम्। यः महाम्बरम् अखण्डाकाशो भवन् सन्नपि, निरम्बरः अनम्बर इति विरोधः; वसनशून्य इति च तत्समाधानम्। यश्च रमायाः स्त्रियाः पार्श्वस्थायाः अर्द्धं भजत इति रमार्द्धभाक्, तदर्द्धदेहो यस्य सः अर्द्धनारीश्वरत्वात् तादृशः सन्नपि, मारमारकः कामहन्तेति कामिनीधारणकामहननयोर्विरोधः; भगवच्चिन्ता च तत्समाधानम्। स विभुर्व्यापकः, भवो महादेवः, वो युष्माकं श्रोतॄणाम्, विभूतिदः सम्पत्प्रदाता भवतु।

अत्रार्थालङ्कारो विरोधाभासः, शब्दालङ्कारश्च वृत्त्यनुप्रासच्छेकानुप्रासौ इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः। श्रीहर्षकृतनैषधचरितवदस्मिन् काव्येऽपि इत्थमेव प्रतिश्लोकमनुप्रासालङ्कारप्राचुर्य्यमनायाससुज्ञेयम्।

अत्र अभीष्टविषयस्य मङ्गलरूपत्वादनभीष्टविषयस्यामङ्गलरूपत्वं सिद्धमिति शवस्यानभीष्टरूपत्वादमङ्गलरूपत्वम्। "मूर्त्तयोऽष्टौ शिवस्यैता"

* "महाकविः स एव स्यादयो महाकाव्यकृत् कविः" इति भोजराजः।

समस्ततो विषयततेर्लंसामनि
प्रथीयसि प्रथितविदर्भनामनि।
परान् परं किल विषये विभीषयन्
स भीमकः समिति बभूव भूपतिः ॥२॥

---

इत्यादिकम् तौ शिवस्याकाममूर्त्तित्वमनुसन्धेयम्। ननु निर्मक्षिकमित्यादौ निरुपसर्गस्यात्यन्ताभावपरत्वात् निरम्बर इत्यन्योन्याभावपरत्वे लुप्तव्यापत्त्या नियार्थे तादोषापत्तिरिति चेन्न, "तत्र निरवद्यविधौ योतितः स्वत्वतोऽयमर्थः" इति दायभागे निरुपसर्गस्यान्योन्याभावपरतादर्शनात्। न च तत्रापि अवधेति भावे निपातमङ्गीकृत्य अत्यन्ताभावपरत्वस्य सुवचत्वमिति वाच्यम्; "पण्यावद्यवर्ज्याविक्रेयगर्ह्यानिरोधेषु" इति सूत्रकृतो कर्मण्येव निपातस्योदाहृतत्वेन भावे तन्निपाताङ्गीकारासम्भवात्, किञ्च "निवृत्तसुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः" इति भारविप्रयोगे निवृत्तसुकानामिति निरुपसर्गस्य अन्योन्याभावपरताया अकामेनाप्यङ्गीकार्य्यत्वात्।

"स्मः कान्ते रक्ताशोके मन्मथे च स्मा स्त्रियाम्" इति हेमचन्द्रः।

अस्मिन् सर्गे रुचिरा नाम वृत्तम्—"जतौ जरौ गितिरुचिरा चतुर्ग्रहैः" इति लक्षणात् ॥१॥

বাঙ্গালা—যিনি কালীর চরণতলগত শব হইয়াও শিব, যিনি অখণ্ড আকাশ হইয়াও আকাশভিন্ন (দিগম্বর) এবং যিনি (কামচরিতার্থতার জন্য) আপন দেহার্দ্ধে কামিনীকে ধারণ করিয়াও কামহন্তা; সেই বিশ্বব্যাপক মহাদেব তোমাদের সম্পৎপ্রদাতা হউন ॥১॥

अन्वयः—समस्ततः विषयततेः लसामनि प्रथीयसि प्रथितविदर्भनामनि विषये समिति किल परान् परं विभीषयन् स भीमकः नाम भूपतिः बभूव ॥२॥

महाकविः सकलसवर्णयोजने
सुतो रवेरविनयदण्डधारणे ।
चमाभृतो चितिभृदशेषसत्त्ववान्
मनस्विभिः क्षतिसननैरमानि यः ॥३॥

यस्तु निर्द्दिंशति समन्तात इति । समन्ततः सर्व्वासामेव दिशाम्, विषयततेर्देशसमूहस्य, ललामनि प्रधाने, प्रथीयसि अतिविशाले, प्रथित प्रसिद्धं विदर्भेति नाम यस्य तस्मिन्, विषये देशे, समिति युद्धे, परान् शत्रून्, परमत्यन्तं विभीषयन् संग्रामेण भयं प्रापयन्, स प्रसिद्धो भीष्मको नाम भूपतिर्बभूव ।

अत्र भीष्मकनाम प्रति विभीषयन्निति पदस्यार्थो हेतुरिति पदार्थ-हेतुकं काव्यलिङ्गमलङ्कारो यमकछेकानुप्रासाभ्यां संसृज्यते ।

"नीवृज्जनपदो देशविषयौ" इत्यमरः । "धराधरेन्द्रं व्रततीततीरिव" इति माघे समूहार्थे ततिशब्दः । "ललाम स्यात् प्रभावे च लाञ्छन-ध्वजवाजिषु । शृङ्गे प्रधाने भूषायामपि वालधिपुण्ड्रयोः" इति मेदिनी ॥

विशेषेण बिभ्यतं प्रयुञ्जान इति विभीषयन् भीधातोर्णिचि "भीस्मि-—" इत्यादिनापकात् षान्तता, करणभयाच्च "हेतुकर्त्तृ-भीस्मोरिन्" इति वृषादित्वादात्मनेपदविषयता ॥२॥

বাঙ্গালা—সকল দিকের দেশসমূহের মধ্যে শ্রেষ্ঠ অতিবিশাল বিদর্ভদেশে শত্রুগণের অত্যন্ত ভয়জনক 'ভীষ্মক'নামে একজন প্রসিদ্ধ রাজা ছিলেন ॥২॥

अन्वयः—क्षतिमननैः मनस्विभिः यः सकलसवर्णयोजने महाकविः, अविनयदण्ड-धारणे रवेः सुतः, चमाभृतो अशेषसत्त्ववान् चितिभृत् ( च ) अमानि ॥३॥

पञ्चविंशत्या श्लोकै राजानं वर्णयति महाकविरिति । क्षति-

कलावतः सकलजनप्रमोदिनः
सितात्मनोऽप्यमृतकरस्य यस्य च ।

वस्तुस्वरूपनिरूपणनिपुणं मननं सम्भावनं येषां तैः कृतिमननैः अतएवामीषां मननं यथार्थमेवेति भावः । मनस्विभिः प्रशस्तमनोभिर्जनैः, यो भीष्मकः, सकलाः सवर्णा ब्राह्मणादयः समाना जातय एव सवर्णा अकारादीनि समानान्यक्षराणि तेषां योजनम् एकस्मिन् ग्रामादावव-स्थापनमेव योजनं काव्यादौ प्रयोगस्तस्मिन्, महाकविः महाकविस्वरूपः ; विशिष्टो नयो विनयः न विद्यते विनयो येषां तेषामविनयानां दुर्नीति-परायणानां जनानां दण्डधारणं दण्डविधानमेव दण्डधारणं लगुड-ग्रहणं तस्मिन्, रवेः सुतो यमस्वरूपः ; क्षमा सहिष्णुतैव क्षमा पृथिवी तस्याः भृतौ वहने, अशेषसत्त्ववान् सर्वविधाध्यवसायशाली सकल-प्राणिमांश्च ; क्षितिभृत् पर्वतश्च, अमानि सम्भावितः ।

अत्र श्लेषेण ब्राह्मणप्रभृतिसमानजात्यादिषु अकारप्रभृतिसमाना-क्षरत्वारोपो राजनि भीष्मके महाकवित्वारोपे निमित्तमिति श्लिष्ट-परम्परितं रूपकमलङ्कारः, एकस्य भीष्मकस्य अनेकधोल्लेखादुल्लेखः, आद्या भावाभिमानिनो जात्याद्यात्प्रेक्षावयश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते ।

"क्षितिक्षान्त्योः क्षमा" इति "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति चामरः ॥३॥

বাঙ্গালা—যাঁহাদের সম্ভাবনা বস্তুস্বরূপনিরূপণ করিতে নিপুণ, সেই মনস্বীরা যে ভীষ্মকরাজাকে ব্রাহ্মণাদি সকল জাতিরূপ অকারাদি সমস্ত বর্ণের যোগ করার বিষয়ে মহাকবিস্বরূপ, দুর্জ্জনদিগের দণ্ডদানরূপ দণ্ডধারণ বিষয়ে যমস্বরূপ এবং ক্ষমারূপ পৃথিবী ধারণ বিষয়ে সর্ব্ববিধ অধ্যবসায়রূপ সর্ববিধ জন্তুযুক্ত পর্বতস্বরূপ মনে করিতেন ॥৩॥

महाकविः सकलसवर्णयोजने
सुतो रवेरविनयदण्डधारणे ।
क्षमाभृतो क्षितिभृदशेषसत्त्ववान्
मनस्विभिः क्षतिमननै रमानि यः ॥३॥

---

— वस्तु निर्दिशति समन्तत इति । समन्ततः सर्व्वासामेव दिशाम्, विषयततेर्देशसमूहस्य, ललामनि प्रधाने, प्रथीयसि अतिविशाले, प्रथितं प्रसिद्धं विदर्भ इति नाम यस्य तस्मिन्, विषये देशे, समिति युद्धे, परान् शत्रून्, परमत्यन्तं विभीषयन् संग्रामेण भयं प्रापयन्, स प्रसिद्धो भीष्मको नाम भूपतिर्बभूव ।

अत्र भीष्मकनाम प्रति विभीषयन्निति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारो यमकवृत्त्यनुप्रासाभ्यां संसृज्यते ।

"नीवृज्जनपदो देशविषयौ" इत्यमरः । "धराधरेन्द्रं व्रततीततीरिव" इति माघे समूहार्थे ततिशब्दः । "ललाम स्यात् प्रभावे च लाञ्छने ध्वजवाजिषु । शृङ्गे प्रधाने भूषायामपि वालविपुण्ड्रयोः" इति मेदिनी ॥

विशेषेण बिभ्यतं प्रयुङ्क्ते इति विभीषयन् भीधातोर्णिचि "भीषि-चिन्ति—" इत्यादिज्ञापकात् षान्तता, कर्त्तृभयाच्च "हेतुकर्तृ-भीष्मयोरिन्" इति कथादित्वाचात्मनेपदविषयता ॥२॥

বাঙ্গালা—সকল দিকের দেশসমূহের মধ্যে শ্রেষ্ঠ অতিবিশাল বিদর্ভদেশে শত্রুগণের অত্যন্ত ভয়জনক 'ভীষ্মক'নামে একজন প্রসিদ্ধ রাজা ছিলেন ॥২॥

अन्वयः—क्षतिमननैः मनस्विभिः यः सकलसवर्णयोजने महाकविः, अविनयदण्डधारणे रवेः सुतः, क्षमाभृतो अशेषसत्त्ववान् क्षितिभृत् ( च ) स्मानि ॥३॥

पञ्चविंशत्या श्लोकैः राजानं वर्णयति महाकविरिति । क्षति-

कलावतः सकलजनप्रमोदिनः
सिताम्मनोऽप्यमृतकरस्य यस्य च।

वस्तुस्वरूपनिरूपणनिपुणं मननं सम्भावनं येषां तैः कृतिमननैः अतएवामीषां मननं यथार्थमेवेति भावः। मनस्विभिः प्रशस्तमनोभिर्जनैः, यो भीष्मकः, सकलाः सवर्णाः ब्राह्मणादयः समाना जातयः एव सवर्णाः अकारादीनि समानान्यक्षराणि तेषां योजनम् एकस्मिन् ग्रामादाववस्थापनमेव योजनं काव्यादौ प्रयोगस्तस्मिन्, महाकविः महाकविस्वरूपः; विशिष्टो नयो विनयः न विद्यते विनयो येषां तेषामविनयानां दुर्नीतिपरायणानां जनानां दण्डधारणे दण्डविधानमेव दण्डधारणं लगुडग्रहणं तस्मिन्, रवेः सुतो यमस्वरूपः; क्षमा सहिष्णुतैव क्षमा पृथिवी तस्याः भृतौ वहने, अप्रमेयसत्त्ववान् सर्व्वविधाध्यवसायशाली सकलप्राणिनाञ्च। क्षितिभृत् पर्व्वतश्च, अमानि सम्भावितः।

अत्र श्लेषेण ब्राह्मणप्रभृतिसमानजात्यादिषु अकारप्रभृतिसमानाक्षरत्वारोपो राजनि भीष्मके महाकवित्वाद्यारोपे निमित्तमिति श्लिष्टपरम्परितं रूपकमलङ्कारः, एकस्य भीष्मकस्य अनेकधोल्लेखादुल्लेखः, साध्या भावाभिमानिनी आत्याद्युत्प्रेक्षालयश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते।

"क्षितिक्षान्त्योः क्षमा" इति "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति चामरः ॥३॥

বাঙ্গালা—যাঁহাদের সম্ভাবনা বস্তুস্বরূপনিরূপণ করিতে নিপুণ, সেই মনস্বীরা যে ভীষ্মকরাজাকে ব্রাহ্মণাদি সকল জাতিরূপ অকারাদি সমস্ত বর্ণের যোগ করার বিষয়ে মহাকবিস্বরূপ, দুর্জ্জনদিগের দণ্ডদানরূপ দণ্ডধারণ বিষয়ে যমস্বরূপ এবং ক্ষমারূপ পৃথিবী ধারণ বিষয়ে সর্ব্ববিধ অধ্যবসায়রূপ সত্ত্বযুক্ত পর্ব্বতস্বরূপ মনে করিতেন ॥৩॥

कलङ्किनीं किल परिभायिनीं तनो-
र्विधोर्विधां ननु विदधौ पटुर्विधिः ॥४॥

अन्वयः—पटुः विधिः कलावतः सकलजनप्रमोदिनः सितात्मनः अमृतकरस्य अपि यस्य च परिभायिनीं ननु विधोः तनोः कलङ्किनीं विधां विदधौ किल ॥४॥

चन्द्रादैन्यं विशिनष्टि कलेति। पटुः सृष्टिनिपुणो विधिः, कला नृत्यगीतादिचतुःषष्टिप्रकारा विद्या षोडशभागश्च सा अस्यास्तीति कलावान् तस्य कलावतः, सकलान् जनान् प्रमोदयति व्यवहारेण किरणेन च आनन्दयतीति तस्य सकलजनप्रमोदिनः, सितो निर्मलः शुभ्रश्च आत्मा बुद्धिः शरीरञ्च यस्य तस्य सितात्मनः, अमृतं पीयूषमिव करः सुखस्पर्शो हस्तः किरणश्च यस्य तस्य, अपिः समुच्चये, यस्य च राज्ञो भीष्मकस्य परिभायिनीं भेदबुद्धिजनिकाम्, नन्वित्यवधारणे, विधोश्चन्द्रस्य, तनोः मूर्त्तेः, कलङ्किनीं शशचिह्नवतीम्, विधां प्रकारम्, विदधौ चकार, किलेति सम्भावनायाम्। लोकेऽपि निर्माणनिपुणः कुलालो घटयोः साम्ये विशेषविधानाय तयोरन्यतरं कृष्णादिचिह्नेनाङ्कयति। कलावत्त्वादिधर्मसाम्येऽपि यो निष्कलङ्कः स भीष्मकः, यश्च सकलङ्कः स चन्द्र इति संक्षिप्तः सरलार्थः।

अत्रोपमानाच्चन्द्रादुपमेयस्य भीष्मकस्याधिक्यवर्णनया श्लेषाश्लिष्टो व्यतिरेकालङ्कारः, विधेस्सादृश्योद्देशेन कलङ्कविधानासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते; व्यतिरेकालङ्कारेण च निष्कलङ्को भीष्मक इति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

"बलिहस्तांशवः कराः" इति "विधा वृत्तौ प्रकारे च" इति चामरः ॥४॥

तमोऽपहं प्रतिदिननूतनोदयं
धराधरोपहितसहस्रधाकरम् ।
दिनं दिनं दिनमणिमस्तगामिनम्
अनस्तगं यमपि जनाः स्म जानते ॥५॥

---

বাঙ্গালা—চন্দ্রের কলা আছে, ভীষ্মকরাজারও কলা ( নৃত্যগীতাদি কলাবিদ্যা ) ছিল ; চন্দ্র জ্যোৎস্নাদ্বারা সমস্ত লোককে আনন্দিত করেন, ভীষ্মকরাজাও ব্যবহারদ্বারা সমস্ত লোককে আনন্দিত করিতেন ; চন্দ্রের আত্মা ( মূর্ত্তি ) নির্ম্মল, ভীষ্মকরাজারও আত্মা ( বুদ্ধি ) নির্ম্মল ছিল এবং চন্দ্রের কর ( কিরণ ) অমৃততুল্য, ভীষ্মকরাজারও কর (হস্ত) অমৃততুল্য ছিল ; ( সুতরাং চন্দ্র ও ভীষ্মকরাজার অভিন্নতা প্রতীতি হইতে পারে বলিয়া ) নির্ম্মাণনিপুণ বিধাতা ভীষ্মকরাজার ভেদ বুঝিবার জন্য চন্দ্রের উপরে একটী কলঙ্ক বিধান করিয়াছিলেন ॥৪॥

अन्वयः—जनाः तमोऽपहं प्रतिदिननूतनोदयं धराधरोपहितसहस्रधाकरं दिनमणिं दिनं दिनं अस्तगामिनं, यं अपि अनस्तगं जानते स्म ॥५॥

सूर्य्यादस्य भेदं बोधयति तम इति । जनास्तदानीन्तना लोकाः, तमः अन्धकारं तमोगुणनिबन्धनमज्ञानञ्च अपहन्ति किरणेन सदुपदेशेन च नाशयतीति तम्, प्रतिदिनं नूतन उदय उदयाचलोद्गमः सम्पदुत्पत्तिश्च यस्य तम्, धराधरेषु पर्व्वतेषु सामन्तनृपतिषु च उपहिता स्थापिता सहस्रधा सहस्रप्रकाराः कराः किरणा राजग्राह्यांशाश्च येन तम्, दिनमणिं सूर्य्यम्, दिनं दिनं प्रत्यहम्, अस्तगामिनम् अस्ताचलसम्बद्धम्, यमपि यं भीष्मकञ्च, अनस्तगम् अविनाशिनम्, जानते स्म अवगतवन्तः ।

अत्राप्युपमानात् सूर्य्यात् उपमेयस्य भीष्मकस्य आधिक्यवर्णनात् श्लेषानुप्राणितो व्यतिरेकालङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चैतेषां

शिवान्वितं शशिविशदोत्तमाङ्गकं
त्रिलोचनं परिगतशास्त्रलोचनैः ।
निरीक्ष्य यं नियतमनुग्रविग्रहं
जनो मनो हरविषयं न्यवीवृतत् ॥६॥

---

संसृष्टिः, न च तृतीयपादान्तिमाक्षरस्य लघुतया हतवृत्ततादोष इति वाच्यम्, "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति परिभाषायाः सर्वपादान्तिमाक्षरस्यैव परिग्रहात् । एतच्चामुना कविनैव साहित्यदर्पण-टीकायां सप्तमपरिच्छेदे हतवृत्ततादोषप्रकरणे सोदाहरणं बहुधा विमृष्टम् ।

धरां धरतीति व्युत्पत्त्या धराधरशब्देन पर्वतराजानामुभा-यमुच्यते ॥५॥

**বাঙ্গালা**—সূর্য্য তম (অন্ধকার) নাশ করেন, ভীষ্মকরাজাও তম (অজ্ঞান) নাশ করিতেন; সূর্য্যের প্রত্যহ নূতন উদয় হয়, ভীষ্মকরাজারও প্রত্যহ নূতন উদয় (অভ্যুদয়) হইত; সূর্য্য ধরাধর-(পর্ব্বত) সমূহের উপরে সহস্র কর (কিরণ) স্থাপন করেন, ভীষ্মকরাজাও ধরাধর- (সামন্তরাজ) সমূহের উপরে সহস্রপ্রকার কর (খাজনা) স্থাপন করিতেন; (এইরূপে সূর্য্য ও ভীষ্মকরাজার অভিন্নতা হইলেও) সূর্য্য প্রতিদিন অস্তগামী হন, কিন্তু ভীষ্মকরাজা সেরূপ অস্তগামী হন না—এই ভাবে তৎকালের লোকেরা সূর্য্য ও ভীষ্মকরাজার বিভিন্নতা বুঝিত ॥৫॥

**অন্বয়:**—জন: শিবান্বিতং শশিবিশদোত্তমাঙ্গকং পরিগতশাস্ত্রলোচনৈ: ত্রিলোচনং (অপি) যং নিয়তং অনুগ্রবিগ্রহং নিরীক্ষ্য হরবিষয়ং মন: ন্যবীবৃতৎ ॥৬॥

शिवादस्य विशेषं द्योतयति शिवेति । जनः, शिवया दुर्गया शिवेन मङ्गलेन चान्वितं युक्तम्, शशिना चन्द्रेण विशदं निर्मलम् उत्तमाङ्गं

श्रियाश्रितः सकलतनौ तनूनपा-
न्महामहा बहुतरचक्रधारकः ।
उरःस्थले परिलसदेककश्रियं
जहास यो मधुरिपुमेकचक्रकम् ॥७॥

---

मस्तकं तस्य तम्, अन्यत्र शशिनश्चन्द्रस्येव विशदानि निर्म्मलानि अतएव उत्तमानि अङ्गानि हस्तपदादीनि यस्य तम्, परिगतानि लब्धानि शास्त्राण्येव लोचनानि तैः कपिञ्जलन्यायेन त्रिभिरिति गम्यते, त्रीणि लोचनानि यस्य तं तादृशमपि नियतं ध्रुवं यं भीष्मकम्, न उग्रो भयङ्करो विग्रहः शरीरं यस्य तम्, अन्यत्र न विद्यते उग्रविग्रहः शिवमूर्त्तिर्यस्य तम्, निरीक्ष्य दृष्ट्वा हरः शिव एव विषयो यस्य तत्तादृशं मनः न्यवीवृतत् हरोऽयमिति विषयात् निवर्त्तितवान् । शिवान्वितत्वादिसाम्येऽपि अनुग्रविग्रहनिरीक्षणा-द्वैवेति भावः ।

अत्र शिवाद्युपमानात् उपमेयस्य भीष्मकस्य उग्रविग्रहन्यूनतावर्णना-द्व्यतिरेकालङ्कारः मनसो निवर्त्तनं प्रति अनुग्रविग्रहं निरीक्ष्येति पदार्थस्य हेतुतया पदार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोः पूर्ववत् सङ्करः, सोऽपि च श्लेषेण पूर्ववदेवानुप्रासाभ्याञ्च संसृज्यते ॥६॥

**বাঙ্গালা**—মহাদেব শিবান্বিত (দুর্গাযুক্ত), ভীষ্মকরাজাও শিবান্বিত (শিব-মঙ্গল-যুক্ত), মহাদেব শশিবিশদোত্তমাঙ্গক (ললাটে চন্দ্র থাকায় তাঁহার কিরণে নির্ম্মল মস্তকযুক্ত), ভীষ্মকরাজাও শশি-বিশদোত্তমাঙ্গক (চন্দ্রের ন্যায় নির্ম্মল ও উত্তম অঙ্গযুক্ত), এবং মহাদেব ত্রিলোচনযুক্ত, ভীষ্মকরাজাও তিনটী শাস্ত্ররূপ ত্রিলোচনযুক্ত; (এই ভাবে মহাদেব ও ভীষ্মকরাজার অভিন্নতা হইয়া পড়িলেও) মহাদেব উগ্রমূর্ত্তি, আর ভীষ্মকরাজ। উগ্রমূর্ত্তি নহেন; এইরূপ দেখিয়া সে কালের মানুষ (ভীষ্মকরাজাকে দেখিবার সময়ে) মহাদেব মনে করিত না ॥৬॥

रणोद्यमे धरणिविकम्पसम्भ्रमात्
हुलुध्वनिं प्रथममदृश्य यस्य याः ।
अनन्तरं हृदयमपि प्रकम्पितं
विलोक्य ता रिपुवनिता विततसुः ॥८॥

---

अन्वयः—सकलतनौ श्रियाश्रितः तनूनपान्महामहाः बहुतरचक्रधारकः (च) यः उरःस्थले परिलसदेककश्रियं एकचक्रकं मधुरिपुं जहास ॥७॥

नारायणात्तस्य व्यतिरेकं सूचयति श्रियेति । सकलतनौ सर्व्वशरीरे, श्रीः शोभैव श्रीर्लक्ष्मीस्तया आश्रितः, तनूं न पाति संसक्तो न रक्षतीति तनूनपादग्निस्तस्येव महत् महस्तेजो यस्य स तनूनपान्महामहाः, बहुतरं चक्रं राज्यमेव चक्रमस्त्रविशेषं धारयतीति बहुतरचक्रधारकश्च, यो भीष्मकः, उरःस्थले वक्षोदेशे परिलसन्ति शोभमाना एकिका श्रीर्लक्ष्मीर्यस्य तम्, एकमेव चक्रं सुदर्शनं यस्य तञ्च, मधुरिपुं नारायणं जहास ।

अत्र शोभालक्ष्म्योः राज्यचक्रयोश्च भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः नारायणात् भीष्मकस्याधिक्यवर्णनात् व्यतिरेकः, हासं प्रति कतिपयपदार्थानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनः यमक-छेकवृत्त्यनुप्रासैः संसृज्यते ।

"श्रीर्लक्ष्मीर्वेशसम्पत्सु भारती शोभयोरपि" इति त्रिकाण्डशेषः ; "जातवेदास्तनूनपात्" इति "महस्तूत्सवतेजसोः" इति "चक्रं राष्ट्रेऽपि" इति चामरः ॥७॥

বাঙ্গালা:—সমস্ত শরীরে শ্রীযুক্ত, অগ্নির ন্যায় মহাতেজা এবং বহুতরচক্রধারী (বহুসংখ্যকরাজ্যপালক) যে ভীষ্মকরাজা, কেবল বক্ষঃস্থলে একমাত্র শ্রীযুক্ত এবং একমাত্রচক্রধারী নারায়ণকে উপহাস করিতেন ॥৭॥

द्विषच्चमूं प्रति गतिमात्रतोऽपि यो
जयश्रियं प्रथममशिश्रियन्मृधात्।
उषामसौ पुरत उपैत्यहर्पतिः
परं ततस्तिमिरततिं छिनत्ति हि ॥९॥

---

अन्वयः—याः यस्य रणोद्यमे धरणिविकम्पसंशयात् प्रथमं हुलुध्वनिं अदुः, अनन्तरं हृदयं अपि प्रकम्पितं विलोक्य ताः रिपुवनिताः वितत्रसुः ॥८॥

रणोद्यम इति। याः रिपुवनिताः, यस्य भीष्मकस्य रणोद्यमे युद्धोद्योगे धरणिविकम्पसंशयात् सैन्यानां पदभरेण भूमिकम्पमनुभूय नागादिचलनेन भूमिकम्पसन्देहात् प्रथमं हुलुध्वनिम्, अदुः अकुर्वन्, अनन्तरं हृदयमपि उद्वेगेन प्रकम्पितं विलोक्य अनुभूय, ता एव रिपुवनिताः वितत्रसुः भीष्मकस्याक्रमणसम्भवात् त्रासं प्रापुः।

अत्र भीष्मकरणोद्यमे रिपुवनितानां हुलुध्वनिदानासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः चतुर्थचरणगतवृत्त्यनुप्रासेन संसृज्यते। भूमिकम्पानुभवे स्त्रीणां हुलुध्वनिदानं देशाचारः ॥८॥

বাঙ্গালা—যে ভীষ্মকরাজা যুদ্ধের উপক্রম করিলে, যে সকল বিপক্ষ মহিলা ভূমিকম্পের আশঙ্কা করিয়া প্রথমে হুলুধ্বনি দিত, তাহারাই পরে আপনাদের হৃদয়ও কম্পিত হইয়াছে দেখিয়া বিশেষ উদ্বিগ্ন হইত ॥৮॥

अन्वयः—यः अपि द्विषच्चमूं प्रति गतिमात्रतः मृधात् प्रथमं जयश्रियं अशिश्रियत्। असौ अहर्पतिः हि पुरतः उषां उपैति, ततः परं तिमिरततिं छिनत्ति ॥९॥

राज्ञः शौर्यं विवृणोति द्विषदिति। योऽपि यश्च भीष्मकः, द्विषच्चमूं शत्रुसेनां प्रति, गतिमात्रतः केवलाद्गमनादेव, मृधात् युद्धात्, प्रथमं पूर्वम्, जयश्रियं विजयलक्ष्मीम्, अशिश्रियत् प्रापत् यथेन शत्रुसेनायाः

उरःस्थलस्थितकमलाख्यमत्सरात्
सरस्वती शुचिरसनासना सती ।
यदीयके यशसि मनस्यनारतं
कविच्छलादपि हसिते विदिद्युते ॥१०॥

---

पलायनादिति भावः। असौ अहर्पतिः सूर्य्यो हि, पुरतः पूर्व्वम्, उषां प्रत्यूषम्, उपैति प्राप्नोति; ततः परं तिमिरततिम् अन्धकारसमूहम्, छिनत्ति नाशयति।

अत्र युद्धात् पूर्व्वं जयश्रियो लाभासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः साधर्म्म्येण दृष्टान्तः, छेकानुप्रासो वृत्त्यनुप्रासश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः।

"मृधमास्कन्दनं संख्यम्" इति युद्धपर्य्याये अमरः ॥९॥

বাঙ্গালা—যে ভীষ্মকরাজা শত্রুসৈন্যের প্রতি গমন করিয়া যুদ্ধ করিবার পূর্ব্বেই বিজয়লক্ষ্মী লাভ করিতেন। কারণ, সূর্য্য প্রথমে উষাকে লাভ করেন, তাহার পরে অন্ধকারসমূহ বিনষ্ট করিয়া থাকেন ॥৯॥

अन्वयः—सरस्वती उरःस्थलस्थितकमलाख्यमत्सरात् कविच्छलात् शुचिरसनासना सती यदीयके यशसि मनसि हसिते अपि अनारतं विदिद्युते ॥१०॥

राज्ञो विद्यावैभवमाह उर इति। सरस्वती वाग्देवी, उरःस्थले वक्षोदेशे स्थिता या कमला विशालतया वीरलक्ष्मीः तस्यां तिष्ठतीति स तादृशो यो मत्सरो विद्वेषस्तस्मात्, कविच्छलात् शुभदन्तप्रभाव्यपदेशात्, शुचिः पवित्रा या रसना जिह्वा सैव आसनं यस्याः सा तादृशी सती, यदीयके यस्य भीष्मकस्य सम्बन्धिनि यशसि मनसि हसिते अपि, अनारतं निरन्तरम्, विदिद्युते बभौ।

निरन्तरं दिशि दिशि गायतां सतां
सुखाम्लिकापरिणतिचिह्नचिह्नितम् ।
सुधाम्बुधेर्जलविमलञ्च यद्यशः
जगज्जनाः शशधरमेव मेनिरे ॥११॥

---

अत्र कार्य्येण सरस्वत्यां सपत्नीव्यवहारसमारोपात् समासोक्ति-रलङ्कारः, अपह्नुतिः, एकस्याः सरस्वत्याः मनःप्रभृत्यनेकगोचरतया पर्य्यायश्च इत्येतेषाम् अङ्गाङ्गिभावेन सङ्करः, सोऽपि च यमकवृत्त्यनु-प्रासाभ्यां संसृज्यते ।

"नत्सरोऽन्यशुभोद्वेषे तद्वत् कृपणयोस्त्रिषु" इत्यमरः ॥१०॥

**বাঙ্গালা**—যে ভীমকরাজার বিশাল বক্ষদেশে সর্বদা বীরলক্ষ্মী অবস্থান করিতেন বলিয়া তাঁহার প্রতি বিদ্বেষবশতঃ সরস্বতী শুভ্রদন্ত-প্রভাচ্ছলে যে ভীমকরাজার নির্মল রসনাদেশে থাকিয়া যশ, মান এবং হাস্তেও সর্বদা প্রকাশ পাইতেন ॥১০॥

**अन्वयः**—जगज्जनाः दिशि दिशि निरन्तरं गायतां सतां सुखाम्लिकापरिणति-चिह्नचिह्नितं सुधाम्बुधेः जलविमलञ्च यद्यशः एव शशधरं मेनिरे ॥११॥

राज्ञो यशःप्रसारं वर्णयति निरन्तरमिति । जगज्जनाः, दिशि दिशि, निरन्तरम्, गायतां यश एव कीर्त्तयताम्, सतां सज्जनानाम्, सुखेषु या अम्लिका स्वाभाविकाम्लरसः तस्याः परिणत्याः परिणामेन यच्चिह्नं कांस्यपात्रादौ तिन्तिरिचिह्नवत् कलङ्कः तेन चिह्नितम् अङ्कितम्, सुधाम्बुधेः क्षीरसमुद्रस्य जलवद्विमलम्, यस्य भीमकस्य यश एव शशधरं चन्द्रं मेनिरे सम्भावितवन्तः ।

अत्र यशसस्ताद्दशचिह्नचिह्नितत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरति-

द्विवर्णभागयदि च यशो जगत्पतेः
तथाप्यभूद्बहुतरवर्णसंयुतम् ।
समं रिरत् प्रतिवनितागतेर्ष्यया
तटान्तरे क्षितिरपि कीर्त्तिमम्बुधेः ॥१२॥

---

श्लेषोक्तिरलङ्कारः वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा च वृत्त्यनुप्रासश्छेकानु-प्रासश्चेत्यनुप्रासाव इत्येतेषां संसृष्टिः ॥११॥

বাঙ্গালা—যে ভীষ্মকরাজার যশ ক্ষীরসমুদ্রের জলের ন্যায় নির্ম্মল ছিল, সাধুপ্রকৃতি লোকেরা সর্ব্বদা সকল দিকে সেই যশ গাহিয়া বেড়াইতেন, তাঁহাতেই তাঁহাদের মুখের অগ্র কালচিহ্নরূপে পরিণত হইয়া সে যশকে অঙ্কিত করিত, এহেন যশকেই জগতের লোক শশাঙ্ক বলিয়া মনে করিত ॥১১॥

अन्वयः—जगत्पतेः यशः यदि च द्विवर्णभाक्, तथापि बहुतरवर्णसंयुतं अभूत् । क्षितिः अपि प्रतिवनितागतेर्ष्यया कीर्त्तिं अम्बुधेः तटान्तरे समेरिरत् ॥१२॥

राज्ञः कीर्त्तियशोविस्तारमाह द्विवर्णभागिति । जगत्पतेर्भूपते-र्भीष्मकस्य, यशो यशःशब्दः, यदि च यद्यपि, द्वौ वर्णौ ब्राह्मणादिवर्णद्वय-स्वररूपे द्वे अक्षरे च भजत इति द्विवर्णभाक् ; तथापि, बहुतरैर्वर्णैः ब्राह्मणादिभिः स्वरैश्च संयुतं सम्बद्धमभूत् । क्षितिरपि अधिकृता भूमिश्च, प्रतिवनितां सपत्नीं गता याऽसौ ईर्ष्या चेति तयैव, कीर्त्तिम्, अम्बुधेः समुद्रस्य, तटान्तरे अपरतीरे, समेरिरत् प्रेरितवती । भीष्मकस्य यशः सर्वजातिभिरुद्घोषितम्, कीर्त्तिश्च दिग्दिगन्तगतेति सरलार्थः ।

अत्र पूर्व्वार्द्धे श्लेषेण विरोधसमाधानात् विरोधाभासोऽलङ्कारः ; परार्द्धे तु प्रतीयमाना भावाभिमानिनी गुण्योत्प्रेक्षा ; अनयोः परस्पर-निरपेक्षतया संसृष्टिः ।

शरीरिणां सहभवदूषणानि षड्
जितेन्द्रिये यमवति तत्र राजनि।
महाज्वरे विकृतिमतो महौषधे
विषाणि वा परमगुणानजीजनन् ॥१३॥

---

"यशः कीर्त्तिः समज्ञा च" इति कीर्त्तियशसोः पर्य्यायत्वेऽपि "शौर्य्यादिप्रभवा कीर्त्तिर्दानादिप्रभवं यशः" इति महाजनकृतलक्षणात् कीर्त्तियशसोर्भेदेन निर्द्देशः; "स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति" इत्यादिवत्।

"वर्णौ द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे" इत्यमरः ॥१२॥

বাঙ্গালা—ভীষ্মকরাজার যশটী যদিও দুইটী বর্ণ-( অক্ষর ) যুক্ত ছিল, তথাপি বহুতর বর্ণ ( জাতি ) সমন্বিত হইত এবং অধিকৃত ভূমিও সপত্নীগত ঈর্ষ্যাবশতই যেন তাঁহার কীর্ত্তিকে সমুদ্রের অপর পারে প্রেরণ করিয়াছিল ॥১২॥

अन्वयः—शरीरिणां षट् सहभवदूषणानि जितेन्द्रिये यमवति तत्र राजनि महाज्वरे विकृतिमतः महौषधे विषाणि वा परमगुणान् अजीजनन् ॥१३॥

भीष्मकस्य दूषितकामाद्यभावं दर्शयितुं प्रशंसति शरीरिणामिति। शरीरिणाम्, षट्, सहभवदूषणानि काम-क्रोध-लोभ-मोह-मद-मात्सर्य्य-रूपाः सहजा दोषाः, जितेन्द्रिये, यमवति संयमशालिनी, तत्र राजनि भीष्मके, महाज्वरे, विकृतिमतो विकारिणः रोगिणः, महौषधे महौषध-घटकानि विषाणि वा विषाणीव, परमगुणान् अतीवोत्कर्षान् उपकारांश्च, अजीजनन् उत्पादितवन्ति।

अत्र दूषणानि परमगुणानजीजननिति कारणविरुद्धकार्य्योत्पत्ते-र्विषमालङ्कारः श्रौतोपमया सङ्कीर्य्यते।

द्विवर्णभाग्यदि च यशो जगत्पतेः
तथाप्यभूद्बहुतरवर्णसंयुतम् ।
समं रिरत् प्रतिवनितागतेर्ष्यया
तटान्तरे क्षितिरपि कीर्त्तिमम्बुधेः ॥१२॥

---

श्रयोक्तिरलङ्कारः, वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा छेकानुप्रासवृत्त्यनु-प्रासश्च कानुप्रासाव इत्येतेषां संसृष्टिः ॥११॥

বাঙ্গালা—যে ভীষ্মকরাজার যশ ক্ষীরসমুদ্রের জলের ন্যায় নির্ম্মল ছিল, সাধুপ্রকৃতি লোকেরা সর্ব্বদা সকল দিকে সেই যশ গাহিয়া বেড়াইতেন, তাঁহাতেই তাঁহাদের মুখের অগ্র কালচিহ্নরূপে পরিণত হইয়া সে যশকে অঙ্কিত করিত, এহেন যশকেই জগতের লোক শশাঙ্ক বলিয়া মনে করিত ॥১১॥

अन्वयः—जगत्पतेः यशः यदि च द्विवर्णभाक्, तथापि बहुतरवर्णसंयुतं अभूत् । क्षितिः अपि प्रतिवनितागतेर्ष्यया कीर्त्तिं अम्बुधेः तटान्तरे समंरिरत् ॥१२॥

राज्ञः कीर्त्तियशसोर्विस्तारमाह द्विवर्णभागिति । जगत्पतेर्भूपते-र्भीष्मकस्य, यशो यशःशब्दः, यदि च यद्यपि, द्वौ वर्णौ ब्राह्मणादिवर्णद्वयं अक्षररूपे द्वे अक्षरे च भजत इति द्विवर्णभाक्; तथापि, बहुतरैर्वर्णैः ब्राह्मणादिभिः स्वरैश्च संयुतं सम्बद्धमभूत् । क्षितिरपि अधिकृता भूमिश्च, प्रतिवनितां सपत्नीं गता याऽसौ ईर्ष्या चेति तयैव, कीर्त्तिम्, अम्बुधेः समुद्रस्य, तटान्तरे अपरतीरे, समंरिरत् प्रेरितवती । भीष्मकस्य यशः सर्वजातिभिरुद्घोषितम्, कीर्त्तिश्च दिगदिगन्तगतेति सरलार्थः ।

अत्र पूर्वार्द्धे श्लेषेण विरोधसमाधानात् विरोधाभासोऽलङ्कारः; परार्द्धे तु प्रतीयमाना भावाभिमानिनी गुणोत्प्रेक्षा; अनयोः परस्पर-निरपेक्षतया संसृष्टिः ।

शरीरिणां सहभवदूषणानि षड्
जितेन्द्रिये यमवति तत्र राजनि ।
महाज्वरे विकृतिमतो महौषधे
विषाणि वा परमगुणानजीजनन् ॥१२॥

---

"यशः कीर्त्तिः समज्ञा च" इति कीर्त्तियशसोः पर्य्यायत्वेऽपि "शौर्य्यादिप्रभवा कीर्त्तिर्दानादिप्रभवं यशः" इति महाजनकृतलक्षणात् कीर्त्तियशसोर्भेदेन निर्द्देशः ; "स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति" इत्यादिवत् ।

"वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे" इत्यमरः ॥१२॥

বাঙ্গালা—ভীষ্মকরাজার যশটী যদিও দুইটী বর্ণ-( অক্ষর ) যুক্ত ছিল, তথাপি বহুতর বর্ণ ( জাতি ) সমন্বিত হইত এবং অধিকৃত ভূমিও সপত্নীগত ঈর্ষ্যাবশতই যেন তাঁহার কীর্ত্তিকে সমুদ্রের অপর পারে প্রেরণ করিয়াছিল ॥১২॥

अन्वयः—शरीरिणां षट् सहभवदूषणानि जितेन्द्रिये यमवति तत्र राजनि महाज्वरे विकृतिमतः महौषधे विषाणि वा परमगुणान् अजीजनन् ॥१२॥

भीष्मकस्य दूषितकामाद्यभावं दर्शयितुं प्रस्तौति शरीरिणामिति । शरीरिणाम्, षट्, सहभवदूषणानि काम-क्रोध-लोभ-मोह मद-मात्सर्य्य-रूपाः सहजा दोषाः, जितेन्द्रिये, यमवति संयमशालिनी, तत्र राजनि भीष्मके, महाज्वरे, विकृतिमतो विकारिणः रोगिणः, महौषधे महौषध-घटकानि विषाणि वा विषाणीव, परमगुणान् अतीवोत्कर्षान् उपकारांश्च, अजीजनन् उत्पादितवन्ति ।

अत्र दूषणानि परमगुणानजीजननिति कारणविरुद्धकार्य्योत्पत्ते-र्विषमालङ्कारः श्रौतोपमया सङ्कीर्य्यते ।

धनान्यसावचकमतार्थिसात्कृतौ
रिपौ रुषः सुकृतकृतौ च लोभवान् ।
सुमोह दुर्वचसि च सत्कथोन्मदः
समत्सरोऽभवदखिलान् खलान् प्रति ॥१४॥

"वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥१३॥

**বাঙ্গালা**—মহাজ্বরবিকাররোগীর পক্ষে মহৌষধের অন্তর্গত বিষ যেমন অত্যন্ত উপকার উৎপাদন করে, সেইরূপ জিতেন্দ্রিয় ও সংযমযুক্ত ভীষ্মকরাজার পক্ষে প্রাণিগণের স্বাভাবিক কাম, ক্রোধ, লোভ, মোহ, মদ ও মাৎসর্য্য এই ছয়টা দোষ—অত্যন্ত গুণ উৎপাদন করিয়াছিল ॥১৩॥

**अन्वयः**—असौ अर्थिसात्कृतौ धनानि अचकमत, रिपौ रुषः, सुकृतकृतौ च लोभवान्, दुर्वचसि सुमोह, सत्कथोन्मदः, अखिलान् खलान् प्रति च समत्सरः अभवत् ॥१४॥

प्रस्तुतं दोषाणां गुणजननं प्रपञ्चयति धनानीति । असौ भीष्मकः, अर्थिसात्कृतौ याचकेभ्यो दानाय, धनानि अचकमत अभिलषितवान् ; रिपौ शत्रौ, रोषतीति रुषः, सुकृतकृतौ पुण्यकर्म्मणि, लोभवान् लोलुपः; दुर्वचसि कस्मिन्दपि प्रति कटूक्तौ ; सुमोह मोहं वैचित्त्यं प्राप ; सत्कथायाम् उन्मदः अधिकमत्तताशाली ; अखिलान् खलान् दुर्जनान् प्रति च, मत्सरेण शुभोद्वेषेण सहितेन समत्सरः, अभवत् । दानाय धनकामना, शत्रौ क्रोधः, पुण्यकार्य्ये लोभः, कटूक्तौ मोहः, सदालोचनायां मत्तता, दुर्जने मात्सर्य्यञ्च पुरुषस्य महान्तमुत्कर्षं जनयत्येवेति भावः ।

अत्र अर्थिसात्कृतावेव धनान्यचकमत न पुनर्भोगार्थेत्यादिकथि-

दिवा पदं नहि तनुते निशीथिनी
न विद्यते द्युमणिभवा निशि द्युतिः ।
अगोचरे विचरति नैव कोऽपि चेत्
तदात्र काप्यजनि न दुर्जनक्रिया ॥१५॥

---

तान्ययथासंख्यमनादार्थिपरिसंख्यालङ्कारः अखिलान् खलान् इति छेकानुप्रासेन संसृज्यते ।

दीपतीति कथः "नाम्युपध-प्री-ज्ञ-गृभ्यां कः" इति कप्रत्ययः ॥१४॥

বাঙ্গালা।—ভীমকরাজা প্রার্থিগণকে দান করিবার জন্য ধন কামনা করিতেন এবং তাঁহার শত্রুর প্রতি ক্রোধ, পুণ্যকার্য্যে লোভ, দুর্বাক্যে মোহ, সৎকথায় মত্ততা ও সমস্ত খললোকের প্রতি মাৎসর্য্য ( বিদ্বেষ ) ছিল ॥১৪॥

अन्वयः—निशीथिनी दिवा पदं नहि तनुते, द्युमणिभवा द्युतिः ( च ) निशि न विद्यते । कः अपि चेत् अगोचरे न एव विचरति, तदा अत्र का अपि दुर्जनक्रिया न अजनि ॥१५॥

रात्रौ दोषाभावं दर्शयति दिवेति । निशीथिनी रात्रिः, दिवा दिनाभिधाने काले, पदं प्रवृत्तिविशेषम्, नहि तनुते न खलु करोति, द्युमणेः सूर्य्यात् भवतीति-द्युमणिभवा द्युतिर्दीप्तिश्च, निशि रात्रौ न विद्यते । अतएव कोऽपि चेत् अगोचरे आत्मनः अविषये, न विचरति, तदा अत्र भीमके काऽपि दुर्जनक्रिया परानर्थविधानादिरूपा, न अजनि न जाता, अस्य तदविषयत्वादेवेति भावः ।

अत्र विशेषद्वयेन वक्ष्यमाणसामान्यसमर्थनादर्थान्तरन्यासोऽलङ्कारः, "सदसिक्रमं स्वं मगाधिपः" इत्यादिकिरातश्लोके मल्लिनाथोक्तवत् । छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥१५॥

বাঙ্গালা।—যদি, দিনের বেলায় পদক্ষেপ করিবার চেষ্টা করে না

न केवलं किल कलया पृथक् पृथक्
दिगीश्वरा मिलितिमुपागता मिथः।
अवातरन्नवनिपतेः कलेवरे
शशास यद्दश दिश एक एव सः ॥१६॥
विकर्त्तनो महसि, मुखे शशी, क्षतौ
स मङ्गलो, मनसि बुधो, गुरुर्गुणे।

এবং সূর্য্যের দীপ্তিও রাত্রিতে প্রকাশ পায় না। অতএব কোন পদার্থই যদি অবিষয়ে প্রবৃত্ত না হয়, তবে এই ভীষ্মকে কোনও দুর্জনকার্য্যে প্রবৃত্ত হয় নাই (ভীষ্মক কোনও দুর্জনকার্য্য করিতেন না)॥১৫॥

अन्वयः—दिगीश्वराः पृथक् पृथक् कलया केवलं न, (अपि तु) मिथः किल मिलितिं उपागताः (सन्त एव) अवनिपतेः कलेवरे अवातरन्। यत् एक एव सः दश दिशः शशास ॥१६॥

राज्ञो महिमानं प्रतिपादयति नेति। दिगीश्वरा इन्द्रादयो दिक्पालाः "अष्टानां लोकपालानां मात्राभिर्निर्म्मितो नृपः" इति स्मरणात्, पृथक् पृथक् कलया अंशेन, केवलं न, अपि तु, मिथः परस्परं किल, मिलितिं सम्मेलनम्, उपागताः प्राप्ताः सन्त एव, अवनिपतेः राज्ञो भीष्मकस्य, कलेवरे देहे, अवातरन् अवतीर्णाः। यद्यस्मात्, एक एव, स भीष्मकः, दश दिशः शशास। दिक्पालानां पूर्णत्वाभावे पूर्णशासनं न सम्भवतीति भावः।

अत्र दिक्पालानां सम्मेलनपूर्वकावतरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥१६॥

বাঙ্গালা—ইন্দ্রপ্রভৃতি দিক্‌পালগণ পৃথক্ পৃথক্ অংশেই যে কেবল ভীষ্মকরাজার শরীরে অবতীর্ণ হইয়াছিলেন, তাহা নহে; কিন্তু তাঁহারা পরস্পর সম্মিলিত হইয়াই পূর্ণভাবে তাঁহার দেহে অবতীর্ণ হইয়াছিলেন। যেহেতু, তিনি একাকীই দশ দিক্ শাসন করিতেন ॥১৬॥

कविर्गिरि द्विषति शनिश्च तस्थिवान्
तथाप्यभूत् पतिरसौ सुदुर्ग्रहः ॥१७॥
जजन्ति चेत्तहि जलजं जले जले
न चेत् क्षितौ फलति फलं वने वने।
नृपोचितो न खलु तदा तदात्मनि
मदो मनागपि धनसम्भवोऽभवत् ॥१८॥

---

अन्वयः—विकर्त्तनः महसि, शशी मुखे, सः मङ्गलः कृतौ, बुधः मनसि, गुरुः बुद्धौ, कविः गिरि, शनिश्च द्विषति तस्थिवान्, तथापि असौ नृपतिः सुदुर्ग्रहः अभूत् ॥१७॥

तत्र राजनि समानानेव ग्रहाणामधिष्ठानं दुर्द्धर्षत्वञ्च वर्णयति विकर्त्तन इति। विकर्त्तनः सूर्य्यः, महसि तेजसि; शशी चन्द्रः, मुखे वदने; स प्रसिद्धो मङ्गलः, कृतौ क्रियमाणे; बुधः, मनसि; गुरुश्च बृहस्पतिः, बुद्धौ दयादाक्षिण्यादौ; कविः शुक्रो वर्णयिता च, गिरि वाक्ये, शनिः द्विषति शत्रौ च, तस्थिवान् तस्थौ। तथापि असौ नृपतिर्भौमकः, सुदुर्ग्रहः अतीवदुष्प्रापा ग्रहा यस्य स इति विरोधः, अतीवदुर्द्धर्ष इति तत्समाधानम्। अभूत्।

अत्रापि विकर्त्तनादीनां महःप्रभृतिषु स्थितत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, विरोधाभासश्च त्वनयोर्मिथो निरपेक्षतया संसृष्टिः। अतिशयोक्त्या च राज्ञो महःप्रभृतीनां सातिशयत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

"मह उत्सवतेजसोः" इत्यमरः। तस्थिवान् इति स्थाधातोः क्वसुप्रत्यये रूपम्। अभूदिति च भवतेरद्यतन्यां प्रयोगः ॥१७॥

বাঙ্গালা—ভীমরাজার তেজে সূর্য্য, মুখে চন্দ্র, কার্য্যে মঙ্গল, মনে বুধ, গুণে বৃহস্পতি, বাক্যে কবি (শুক্র) এবং শত্রুবর্গে শনি থাকিতেন; তথাপি সেই রাজা অতিদুর্গ্রহ (অতিদুর্লভগ্রহ, অতিদুর্দ্ধর্ষ) ছিলেন ॥১৭॥

भवेज्जले ज्वलनभवापि तप्तता
सुरार्पणात् पुनरनलेऽपि शीतता ।
अभून्नृपे सति च विकारकारणे
हृदाशये नहि विकृतिः कियत्यपि ॥१८॥

अन्वयः—क्षितौ जलजं चेत् जले जले नहि अजनि, फलं (च) चेत् वने वने न फलति, तदा धनसम्भवः नृपोचितः मनाक् अपि मदः तदात्मनि न खलु अभवत् ॥१८॥

राज्ञो धनमत्तता नासीदित्याह अजनीति। क्षितौ पृथिव्याम्, जलजं पद्मञ्चेत्, जले जले प्रतिजलम्, नहि अजनि न जायते; फलञ्चेत्, वने वने प्रतिवनम्, न फलति तरुर्नोत्पादयति स्वयं नोत्पद्यते वा तदा, धनात् सम्भवतीति धनसम्भवः, नृपोचितः राजयोग्यः, मनाक् अल्पोऽपि मदः मत्तता, तस्य भीष्मकस्य आत्मनि चित्ते न खलु अभवत्। जलवने पद्मफलयोरिव धनं न मत्ततायाः नियतं कारणमिति भावः।

अत्र दृष्टान्तोऽलङ्कारः पूर्ववदनुप्रासाभ्यां संसृज्यते।

"किञ्चिदीषन्मनागल्पे" इत्यमरः। अजनीति "जन जनने" इत्यस्य वर्त्तमानातिविभक्तौ जुहोत्यादित्वाद्द्विर्वचने रूपम् ॥१८॥

*বাঙ্গালা*—পৃথিবীতে প্রত্যেক জলে যদি পদ্ম না জন্মে এবং প্রত্যেক বনে যদি ফল উৎপন্ন না হয়, তাহা হইলে রাজার যোগ্য ধনসম্ভূত অল্প মত্ততাও ভীষ্মকরাজার চিত্তে উৎপন্ন হয় নাই ॥১৮॥

अन्वयः—जले अपि ज्वलनभवा तप्तता भवेत्, पुनः अनले अपि सुरार्पणात् शीतता भवेत्। (किन्तु) हृदाशये नृपे विकारकारणे सति च कियती अपि विकृतिः नहि अभूत् ॥१९॥

राज्ञश्चित्तविकारनिबन्धनं विचारवैकल्यं नासीदित्याह भवेदिति। नियतशैत्यगुणे जलेऽपि ज्वलनादग्नेर्भवतीति ज्वलनभवा अग्निसन्तापनिबन्धना तप्तता सन्तापो भवेत्; पुनः अनले अग्नावपि सुरायाः मद्यविशेषस्य अर्पणात् निक्षेपात्, शीतता शैत्यगुणो भवेत्; किन्तु हृदाशयं

महीपतौ मनुमनुसृत्य शासति
प्रजां नहि क्वचिदपि दुःखमस्पृशत् ।
विरोचने सति हि चकासति प्रगे
करोति नो जननयनावृतिं तमः ॥२०॥

---

-अविचलितचित्तवृत्तौ नृपे भीष्मके, विकारकारणे सति च, कियती अपि विकृतिर्विकारः विचारनिबन्धनं विकारवैरूप्यमित्यर्थः, नहि अभूत् ।

अत्र वैधर्म्ये दृष्टान्तोऽलङ्कारः, कारणे सत्यपि कार्य्यानुत्पत्तेर्विशेषोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करश्छेकानुप्रासेन संसृज्यते ॥१९॥

বাঙ্গালা—অগ্নিসন্তাপনিবন্ধন জলেও উষ্ণতা হয় এবং মন্ত্রবিশেষ নিক্ষেপ করিলে অগ্নিতেও শীতলতা হইয়া থাকে ; কিন্তু বিকারের কারণ থাকিলেও দৃঢ়চিত্ত ভীষ্মকরাজার চিত্তে অল্প বিকারও হইত না ।১৯।

अन्वयः—महीपतौ मनुं अनुसृत्य शासति ( सति ) दुःखं क्वचिदपि प्रजां नहि अस्पृशत् । हि प्रगे विरोचने चकासति सति तमः जननयनावृतिं नो करोति ॥२०॥

राज्ञः सुशासनमाह महीति । महीपतौ भीष्मके, मनुं मानवं धर्म्मशास्त्रम्, अनुसृत्य शासति राज्ये शासनं कुर्वति सति, दुःखं कर्तृ, क्वचित् कदाचिदपि, प्रजां जनम्, नहि अस्पृशत् लिप्सतोऽपि न खलु समबध्नात् ; राज्ञः सुशासनगुणादेव तस्करादिनिबन्धनसर्वदुःखनिवृत्तेरिति भावः । हि तथाहि, प्रगे प्रभाते काले, विरोचने सूर्य्ये, चकासति प्रकाशमाने सति, तमः अन्धकारः, जनानां नयनावृतिं चक्षुरावरणं न करोति ।

अत्र साधर्म्ये या दृष्टान्तोऽलङ्कारश्छेकानुप्रासश्चेत्युभयोः संसृष्टिः ।
"प्रजा स्यात् सन्ततौ जने" इति "प्रगे प्रातः" इति चामरः ॥२०॥

বাঙ্গালা—ভীষ্মকরাজা মনুপ্রণীত ধর্ম্মশাস্ত্র অনুসারে রাজ্যশাসন করিতে থাকিলে, কখনও কোন দুঃখ আসিয়া প্রজাগণকে স্পর্শ করিত

भवेज्जले ज्वलनभवापि तप्तता
सुरार्पणात् पुनरनलेऽपि शीतता ।
अभूत्त्रृपे सति च विकारकारणे
हृदाशये नहि विकृतिः कियत्यपि ॥१९॥

अन्वयः—क्षितौ जलजं चेत् जले जले नहि जजन्ति, फलं (च) चेत् वने वने न फलति, तदा धनसम्भवः नृपोचितः मनाक् अपि मदः तदात्मनि न खलु अभवत् ॥१८॥

राज्ञो धनमत्तता नासीदित्याह जजन्तीति। क्षितौ पृथिव्याम्, जलजं पद्मञ्चेत्, जले जले प्रतिजलम्, नहि जजन्ति न जायते; फलञ्चेत्, वने वने प्रतिवनम्, न फलति तरुर्नोत्पादयति स्वयं नोत्पद्यते वा तदा, धनात् सम्भवतीति धनसम्भवः, नृपोचितः राजयोग्यः, मनाक् अल्पोऽपि मदः मत्तता, तस्य भीष्मकस्य आत्मनि चित्ते न खलु अभवत्। जलवने पद्मफलयोरिव धनं न मत्ततायां नियतं कारणमिति भावः।

अत्र दृष्टान्तोऽलङ्कारः पूर्ववदनुप्रासाभ्यां संसृज्यते।

"किञ्चिदीषन्मनागल्पे" इत्यमरः। जजन्तीति "जन जनने" इत्यस्य वर्त्तमानातिविभक्तौ जुहोत्यादित्वाद्द्विर्वचने रूपम् ॥१८॥

বাঙ্গালা—পৃথিবীতে প্রত্যেক জলে যদি পদ্ম না জন্মে এবং প্রত্যেক বনে যদি ফল উৎপন্ন না হয়, তাহা হইলে রাজার যোগ্য ধনসম্ভূত অল্প মত্ততাও ভীষ্মকরাজার চিত্তে উৎপন্ন হয় নাই ॥১৮॥

अन्वयः—जले अपि ज्वलनभवा तप्तता भवेत्, पुनः अनले अपि सुरार्पणात् शीतता भवेत्। (किन्तु) हृदाशये नृपे विकारकारणे सति च कियती अपि विकृतिः नहि अभूत् ॥१९॥

राज्ञश्चित्तविकारनिबन्धनं विचारवैरूप्यं नासीदित्याह भवेदिति। नियतशैत्यगुणे जलेऽपि ज्वलनादग्नेर्भवतीति ज्वलनभवा अग्निसन्तापनिबन्धना तप्तता सन्तापो भवेत्; पुनः अनले अग्नावपि सुरायाः मद्यविशेषस्य अर्पणात् निक्षेपात्, शीतता शैत्यगुणो भवेत्; किन्तु हृदाशये

महीपतौ मनुमनुसृत्य शासति
प्रजां नहि क्वचिदपि दुःखमस्पृशत् ।
विरोचने सति हि चकासति प्रगे
करोति नो जननयनावृतिं तमः ॥२०॥

अविचलितचित्तवृत्तौ नृपे भीष्मके, विकारकारणे सति च, कियती अपि विकृतिर्विकारः विचारनिबन्धनं विकारवैरूप्यमित्यर्थः, नहि अभूत् ।

अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारः, कारणे सत्यपि कार्य्यानुत्पत्ते-र्विशेषोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करश्छेकानुप्रासेन संसृज्यते ॥१९॥

বাঙ্গালা—অগ্নিসন্তাপনিবন্ধন জলেও উষ্ণতা হয় এবং মন্ত্রবিশেষ নিক্ষেপ করিলে অগ্নিতেও শীতলতা হইয়া থাকে ; কিন্তু বিকারের কারণ থাকিলেও দৃঢ়চিত্ত ভীষ্মকরাজার চিত্তে অল্প বিকারও হইত না ॥১৯॥

अन्वयः—महीपतौ मनुं अनुसृत्य शासति ( सति ) दुःखं क्वचिदपि प्रजां नहि अस्पृशत् । हि प्रगे विरोचने चकासति सति तमः जननयनावृतिं नो करोति ॥२०॥

राज्ञः सुशासनमाह महीति । महीपतौ भीष्मके, मनुं मानवं धर्म्मशास्त्रम्, अनुसृत्य शासति राज्ये शासनं कुर्वति सति, दुःखं कर्त्तृ, क्वचित् कदाचिदपि, प्रजां जनम्, नहि अस्पृशत् ईषत्तोऽपि न खलु समस्पृशत् ; राज्ञः सुशासनगुणादेव तस्करादिनिबन्धनसर्वदुःखनिवृत्ते-रिति भावः । हि तथाहि, प्रगे प्रभाते काले, विरोचने सूर्य्ये, चकासति प्रकाशमाने सति, तमः अन्धकारः, जनानां नयनावृतिं चक्षुरावरणं न करोति ।

अत्र साधर्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासश्चेत्युभयोः संसृष्टिः ।
"प्रजा स्यात् सन्ततौ जने" इति "प्रगे प्रातः" इति चामरः ॥२०॥

বাঙ্গালা—ভীষ্মকরাজা মনুপ্রণীত ধর্ম্মশাস্ত্র অনুসারে রাজ্যশাসন করিতে থাকিলে, কখনও কোন দুঃখ আসিয়া প্রজাগণকে স্পর্শ করিত

तमःक्रमो निशि, चलता लतातती,
दिवोष्णता, शशिनि कलङ्ककालिमा।
कलिर्युगे, वचसि विभक्तियोजनम्,
तदाऽभवद्वपुषि च शक्तिधारणम् ॥२१॥

---

না। কারণ, প্রভাতকালে সূর্য্য উদিত হইলে, অন্ধকার লোকের নয়ন আবৃত করে না ॥২০॥

**अन्वयः**—तदा तमःक्रमः निशि, चलता लतातती, उष्णता दिवा, कलङ्ककालिमा शशिनि, कलिः युगे, विभक्तियोजनं वचसि, शक्तिधारणञ्च वपुषि अभवत् ॥२१॥

तदानीन्तनलोकानां प्रायेण दोषाभावं सूचयति तम इति। तदा भीष्मकशासनकाले, तमःक्रमः अन्धकारपरम्परा, निशि रात्रौ, न पुनस्तमःक्रमस्तमोगुणनिबन्धनाज्ञानपरम्परा लोकसमाजे। चलता चञ्चलता, लतातती वल्लीसमूहे; न पुनश्चलता चित्तचाञ्चल्यं स्त्रीजातौ। उष्णता, दिवा सौरकिरणावच्छिन्नकाले; न तु उष्णता कोपसन्तापो जनसमाजे। कलङ्ककालिमा शशचिह्नकार्ष्ण्यम्, शशिनि चन्द्रे; न पुनरपवादमालिन्यं लोकचरित्रे। कलिः अन्तिमयुगम्, युगे सत्यादियुगपर्य्याये, न पुनः कलिः कलहो लोकसमाजे। विभक्तियोजनं सुप्तिङ्प्रयोगः, वचसि वाक्ये; न तु विभक्तियोजनं विभागसम्पादनं भ्रात्रादौ। शक्तिधारणं बलाश्रयणञ्च, वपुषि शरीरे; न तु शक्तिधारणं शक्तिनामकास्त्रग्रहणं विवदमानजनेषु अभवत्; सर्वत्र राज्ञो द्वावेषित्वादिति भावः।

अत्र प्रदर्शितरीत्या कथितान्यवस्तुव्यपोहनात् श्लेषसङ्कीर्णा आर्थी परिसंख्यालङ्कारश्छेकानुप्रासाभ्यां संसृज्यते।

"कलङ्कोऽपवादवादयोः" इत्यमरः, "कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि" इति विश्वः ॥२१॥

বাঙ্গালা—ভীষ্মকরাজার শাসনসময়ে রাত্রিতে তমঃক্রম (অন্ধকার

अहर्पतेरह्नि करैः प्रफुल्लति
सरोजिनी निशि च पुनर्निमीलति।
महीपतेर्जगति करैस्तदातनी
प्रजाऽभजत् सततमतीवफुल्लताम् ॥२२॥

সমূহ) থাকিত, কিন্তু লোকসমাজে তমঃক্রম (অজ্ঞানপরম্পরা) থাকিত না; লতাসমূহে চঞ্চলতা ছিল, কিন্তু স্ত্রীজাতিতে চঞ্চলতা ছিল না; দিনের বেলায় উষ্ণতা (গরম) হইত, কিন্তু লোকসমাজে উষ্ণতা (ক্রোধসন্তাপ) হইত না; চন্দ্রে কলঙ্ককালিমা (শশচিহ্নের কৃষ্ণবর্ণ) ছিল, কিন্তু লোকচরিত্রে কলঙ্ককালিমা (অপবাদমালিন্য) ছিল না; যুগপর্য্যায়ে কলি (শেষযুগ) ছিল, কিন্তু লোকসমাজে কলি (কলহ) ছিল না; বাক্যে বিভক্তিযোজন (সুপ্ ও তিঙ্ বিভক্তির প্রয়োগ) হইত, কিন্তু ভ্রাতৃ-প্রভৃতির মধ্যে বিভক্তিযোজন (বিভাগ করা) হইত না এবং মানুষ শরীরে শক্তি ধারণ (বল ধারণ) করিত, কিন্তু বিবাদের সময় শক্তি ধারণ (শক্তিনামক অস্ত্র গ্রহণ) করিত না ॥২১॥

अन्वयः—सरोजिनी अहनि अहर्पतेः करैः प्रफुल्लति, पुनः निशि च निमीलति। (किन्तु) तदातनी प्रजा जगति महीपतेः करैः सततं (एव) अतीवफुल्लतां अभजत् ॥२२॥

भीष्मकप्रजासु नित्यमेव सन्तोष आसीदित्याह अहर्पतेरिति। सरोजिनी पद्मिनी, अहनि दिवसे, अहर्पतेः सूर्य्यस्य, करैः किरणैः, प्रफुल्लति विकशति हृष्यति च; पुनर्निशि रात्रौ च निमीलति सङ्कुचति विषीदति च। किन्तु तदातनी भीष्मकसमकालीना, प्रजा जनाः, जगति, महीपतेः भीष्मकस्य, करैः राजग्राह्यधनांशैः, सततमेव अतीवफुल्लतां नितान्तमेव विकाशं हर्षञ्च, अभजत् प्राप्नोत्; अधिककरग्रहणा-भावादिति भावः।

अत्र सूर्य्यापेक्षया भीष्मकस्याधिक्यवर्णनात् व्यतिरेकोऽलङ्कारः ॥२२॥

বাঙ্গালা—পদ্মিনী দিনের বেলায় সূর্য্যের কিরণে প্রফুল্ল (বিকশিত)

नृपो मनोर्वचनमृते न कर्म्मकृत्
जनः पुनर्नृपवचनं विना च न ।
जनं जहत्यरमत नो रमापि सा
रमां त्यजद्भवनमभून्न किञ्चन ॥२३॥
विरूपता वियति, विद्रूनता दिने,
विलोड़नात् कलुषितता जलाशये ।

---

হয়, আবার রাত্রিতে সঙ্কুচিত হইয়া যায়, কিন্তু তৎকালের প্রজা, ভীষ্মক-রাজার করগ্রহণের ব্যবস্থায় সর্ব্বদাই অত্যন্ত প্রফুল্ল থাকিত ॥২২॥

अन्वयः—नृपः मनोः वचनं ऋते कर्म्मकृत् न अभूत्, पुनः जनश्च नृपवचनं विना कर्म्मकृत् न अभूत्, सा रमा अपि जनं जहती न अरमत, किञ्चन भवनं रमां त्यजत् न अभूत् ॥२३॥

भीष्मकराज्यस्य सर्वमङ्गलास्पदतां प्रतिपादयति नृप इति। नृपो भीष्मकः, मनोः मनुप्रभृतिधर्म्मशास्त्रकारगणस्य, वचनम् ऋते विना, कर्म्मकृत् न अभूत् किमपि कार्य्यं नाकार्षीदित्यर्थः। पुनर्जनश्च नृपवचनं विना कर्म्मकृत् न अभूत्। सा प्रसिद्धा रमा लक्ष्मीरपि, जनं भीष्मकराज्यस्थलोकम्, जहती त्यजन्ती, न अरमत अन्यत्रानन्दं नान्वभवत्। किञ्चन किञ्चिदपि, भवनं गृहम्, कर्त्तृ, रमां लक्ष्मीम्, त्यजत् न अभूत्।

जहतीति "ओहाक् त्यागे" इति धातोः शतृङ्प्रत्यये रूपम् ॥२३॥

বাঙ্গালা—ভীষ্মকরাজা মনুপ্রভৃতি ধর্ম্মশাস্ত্রকারগণের বাক্য ব্যতীত কোন কার্য্য করিতেন না; আবার প্রজারাও তাঁহার উপদেশ ভিন্ন কোন কর্ম্ম করিত না, লক্ষ্মী সেই প্রজাগণকে পরিত্যাগ করিয়া অন্যত্র আনন্দ অনুভব করিতেন না এবং সেই রাজ্যে কোন গৃহই লক্ষ্মী শূন্য ছিল না ॥২৩॥

पथश्च्युतिर्जलधरवृष्टसम्बरे
विशीर्णताऽवसदपि पापतापयोः ॥२४॥
अवास्थित प्रसिकुसुमं मधुव्रतः
शरासने स्फुटकुसुमं स्मरस्य च ।

अन्वयः—विरूपता वियति, विद्रुतता दिने, विलोडनात् कलुषितता जलाशये, पथः च्युतिः जलधरवृष्टसम्बरे, विशीर्णता अपि पापतापयोः अवसत् ॥२४॥

भीष्मकप्रजानां सौन्दर्यादिसम्पदमाह विरूपतेति। विरूपता रूपशून्यता, वियति आकाश एवामूर्त्तत्वात्; न पुनर्मानुषे विरूपता कुत्सितत्वम्। विद्रुतता सन्तापः, दिने सूर्य्यकिरणप्रभावाद्दिवस एव; न पुनर्मानुषचित्ते विद्रुतता शोकादिसन्तापः। विलोडनात् अवघट्टनात्, कलुषितता आविलता, जलाशये पुष्करिण्यादावेव, न तु लोकसमाजे कलुषितता पापम्। पथो मार्गात्, च्युतिर्भ्रंशः, जलधरवृष्टसम्बरे मेघोद्गतजल एव; न तु लोकसमाजे पथश्च्युतिः सदाचाराद्भ्रंशः। विशीर्णतापि क्षीणतापि, पापतापयोरेव; न तु धर्म्मसुखयोः अवसत्।

अत्रापि पूर्ववदार्थी परिसंख्यालङ्कारः, अवसदित्येकया क्रियया विरूपतादीनां कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते।

"नीरक्षीराम्बु शम्बरम्" इत्यमरः। विद्रुततेति "द्रु गतौ" इति विपूर्वकस्य द्रुधातोः क्तप्रत्यये "स्वादिभ्यः इति" तकारस्य नकारः ॥२४॥

বাঙ্গালা—আকাশে বিরূপতা (রূপহীনতা) ছিল, কিন্তু মানুষে বিরূপতা (সৌন্দর্যহীনতা) ছিল না। আলোড়ননিবন্ধন জলাশয়ে কলুষিততা (আবিলতা) হইত; কিন্তু উৎসব হইলেও মনুষ্যসমাজে কলুষিততা (পাপাচরণ) হইত না। মেঘের জলই পথ হইতে বিচ্যুত হইত; কিন্তু মানুষ পথ (সদাচার) হইতে বিচ্যুত হইত না এবং পাপ ও সন্তাপেরই ক্ষীণতা থাকিত; কিন্তু ধর্ম ও সুখের ক্ষীণতা থাকিত না ॥২৪॥

नयादृते कियदयनं बभूव नो
प्रजान्तरे न च विनयं विना प्रथा।
रथाङ्गिने न, न भवने गदाश्रयः
सदागमादभवदलं मुदागमः ॥२७॥

भीष्मकराज्ये सर्व्वेषामेव विद्वत्त्वं धनित्वञ्चाह सरस्वतीति। सरस्वती वाग्देवी, निखिलनरान् उपाययौ भेजे, तथापि सा सरस्वती जगति भीष्मकराज्ये, सती अव्यभिचारिणी अभ्यर्च्चिता च समीरिता लोकैरुक्ता। ये च लोकाः कमलां लक्ष्मीं चञ्चलां वदन्ति, ते मृषागिरः मिथ्यावाच इति धनेश्वराः तदानीन्तना धनिनः जगुः ऊचुः, स्वेषु कमलायाश्चिर-स्थिरत्वादिति भावः।

अत्र विरोधाभासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते।
"सत्ये साधौ विद्यमाने पूजितेऽभ्यर्च्चिते च सत्" इत्यमरः ॥२६॥

বাঙ্গালা—সরস্বতী তৎকালীন সমস্ত লোককে ভজনা করিতেন, তথাপি তাঁহাকে লোকে সতী বলিত; আর যাহারা লক্ষ্মীকে চঞ্চলা বলে, তাহারা মিথ্যাবাদী, এই কথা তদানীন্তন ধনীরা বলিতেন ॥২৬॥

अन्वयः—नयात् ऋते कियत् अपि अयनं नो बभूव, प्रजान्तरे च विनयं विना प्रथा न बभूव। गदाश्रयः रथाङ्गिने न बभूव, भवने (च) न बभूव, सदागमात् अलं मुदागमः अभवत् ॥२७॥

तदानीन्तनीं लोकानामवस्थामाह नयादिति। नयात् नीतेः, ऋते विना कियत् किञ्चिदपि अयनं पन्था नो बभूव, प्रजानां जनानाम् अन्तरे मध्ये च विनयं विना प्रथा व्यवहारो रीतिः न बभूव। गदाश्रयः गदा-धारणं रथाङ्गिने न बभूव रथस्यैवाभावात्, भवने गृहे च गदानां रोगाणाम् आश्रयः अवस्थितिर्न बभूव, सर्व्वेषामेव स्वास्थ्यनियमानुवर्त्तित्वा-दित्याशयः। सतां सज्जनानाम् आगमात् गृहे उपस्थितेः अलं पर्य्याप्त एव मुदागमः आनन्दोत्पत्तिरभवत्।

इतीदृशैरखिलसुखैरखण्डितैः
धरेशितुर्भुवनतले बभूव सा ।
स्खलत्तुला किल नगरी गरीयसी
भुवि भवेत् क्व न सति कारणे क्रिया ॥२८॥

अत्र बभूवेत्येकया क्रियया बहूनां कर्तृतयाभिसम्बन्धात् तुल्ययोगिता-लङ्कारः, गदाश्च इति श्लेषेण छत्यनुप्रासच्छेकानुप्रासाभ्याञ्च संसृज्यते ।

"अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः" इति "रोगव्याधि-गदामयाः" इति चामरः ॥२७॥

বাঙ্গালা—ভীষ্মকরাজার শাসনকালে নীতিপথব্যতীত মানুষের অন্য কোন পথ ছিল না, প্রজাদের মধ্যে সবিনয় ব্যবহার ভিন্ন অন্য কোন ব্যবহারের রীতি ছিল না, সমরাঙ্গণে গদা ধারণ হইত না, কিংবা গৃহস্থের গৃহে কোন রোগের আবির্ভাবও হইত না এবং সর্ব্বত্রই সজ্জনের উপস্থিতিনিবন্ধন লোকের প্রচুর আনন্দই জন্মিত ॥২৭॥

अन्वयः—धरेशितुः सा गरीयसि नगरी इति ईदृशैः अखण्डितैः अखिलसुखैः भुवनतले स्खलत्तुला बभूव किल । कारणे भुवि सति क्व क्रिया न भवेत् ॥२८॥

विदर्भराजधान्याः प्राधान्यमाह—इतीति । धरेशितुर्भूमिपतेर्भीष्म-कस्य, सा गरीयसी सर्वगौरवास्पदीभूता, नगरी राजधानी, इति पूर्वोक्तं यावत् उक्तैः, ईदृशैः, अखण्डितैः पूर्णैः, अखिलसुखैः, भुवनतले, स्खलन्ती ध्वस्यमाना तुला औपम्यं यस्याः सा निरुपमेत्यर्थः बभूव । किलेत्यैतिह्ये । कारणे भुवि नियते सति, क्व कस्मिन् स्थाने क्रिया कार्यं न भवेत् अपि तु सर्वत्रैव भवेदित्यर्थः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, पूर्ववदनु-प्रासाभ्यां संसृज्यते ॥२८॥

বাঙ্গালা—ভীষ্মকরাজার সেই গৌরবিত নগরী এইরূপ সর্ব্বপ্রকার

स यौवने निरविशदेकदोर्व्वरां
वसुन्धरां विदुषितरां वधूमपि ।
तदादिमाऽनवरतयोग्यलालनात्
प्रजावती भवतितरां स्म, नापरा ॥२९॥

---

পরিপূর্ণ সুখে জগতের মধ্যে নিরুপমা হইয়াছিল। নিয়ত কারণ থাকিলে কোথায় ক্রিয়া না হয় ॥২৮॥

अन्वयः—स यौवने एकदा सर्व्वरां वसुन्धरां विदुषितरां वधू अपि निरविशत्। तदादिमा अनवरतयोग्यलालनात् प्रजावती भवतितरां स्म अपरा न ॥२९॥

स इति। स भीष्मकः, यौवने काले एकदा उर्व्वरां सर्व्वशस्यादाम् वसुन्धरां भूमिम्, विदुषितरां विशेषेण विदुषीं वधूमपि भार्य्याञ्च निरविशत् भुक्तवान्। तदादिमा तयोः प्रथमा वसुन्धरा अनवरतं योग्यं यत् लालनम् आदरेण पालनं तस्मात्, प्रजावती प्रशस्तजनशालिनी, भवतितरां प्रकर्षेण भवति स्म अपरा वधूस्तु प्रजावती सन्तानवती न भवतितरां स्म।

अत्र निरविशदित्येकया क्रियया वधूवसुन्धरयोः कर्म्मतयान्वयात् तुल्ययोगितालङ्कारः प्रजावतीति श्लेषेण हस्वसमासेन च संसृज्यते।

"निर्व्वेशो भृतिभोगयोः" इति "प्रजा स्यात् सन्ततौ जने" इति चामरः।

प्रकर्षेण विदुषीति विदुषितरा "याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित्" इति स्त्रीकारस्य ह्रस्वत्वम्। प्रजावतीति एकत्र प्रशंसायाम् अन्यत्र च संसर्गे मतुप्प्रत्ययः। भवतितरामिति "आख्यातकिमेकारान्ता—" इत्यादिना तराम्प्रत्ययः ॥२९॥

दधाति या धरणिमिमां सदैव, सा
स्वयं हि यज्जठरमविन्ददिन्दिरा ।
पदे पदे स्खलितपदाऽलसा च सा
नृपाङ्गना न गुरुतराऽभवत् कथम् ॥३२॥

अन्वयः—सुतोदरा सितद्युति परिमितभूषणा च सा शिशुचन्द्रिकाम्बरा प्रविरल-तारका नभः प्रभा इव विलोकयन्मनुजमनोविनोदिनी ( सती ) बभौ ॥३१॥

तदानीन्तनीं महिष्या अवस्थामाह त्रिभिः । सितेति । सुता तनया उदरे यस्याः सा, सितद्युतिर्निर्मलकान्तिः, परिमितमल्पं भूषणं यस्याः सा च, सा भीष्मकमहिषी, शिशुचन्द्रिका नवज्योत्स्ना अम्बरे यस्याः सा, प्रविरला अत्यल्पाः तारकाः नक्षत्राणि यस्याः सा, नभःप्रभा आकाश-कान्तिरिव, विलोकयतां निरीक्षमाणानां मनुजानां मनो विनोदयति आनन्दयतीति सा तादृशी सती बभौ ।

अत्र श्रौतोपमालङ्कारस्त्रैकानुप्रासेन संसृज्यते ॥३१॥

বাঙ্গালা—গর্ভে কন্যাধারিণী, নির্ম্মলকান্তি ও অল্পভূষণা ভীষ্মক-মহিষী, নবোদিত জ্যোৎস্নাযুক্তা অত্যল্পনক্ষত্রসমন্বিতা আকাশপ্রভার ন্যায় দর্শনকারী লোকদিগের চিত্তবিনোদন করিতে থাকিয়া শোভা পাইতেন ।৩১।

অন্বয়:—या सदा एव इमां धरणिं दधाति, सा इन्दिरा स्वयं हि यज्जठरं अविन्दत्, सा नृपाङ्गना पदे पदे स्खलितपदा अलसा गुरुतरा च कथं न अभवत् ॥३२॥

दधातीति । या सदैव इमां धरणिं पृथिवीं दधाति पुष्णाति धरति च ; सा इन्दिरा लक्ष्मीः, स्वयं हि आत्मनैव, यस्याः जठरमुदरम्, अविन्दत् अलभत ; सा नृपाङ्गना भीष्मकमहिषी, पदे पदे प्रतिपदक्षेपे, स्खलितपदा अपसरत्चरणा, अलसा, गुरुतरा अतीवभारवती सम्भाना-सदीभूता ■ कथं न अभवत् अपि त्वभवदेव ।

नृपप्रिया वपुरपुषन्मनोहरं
दिने दिने किल कमलालयाश्रितम् ।
प्रदीपभृत् सुविमलकाचमोचिका
तनोत्यलं रुचिररुचिं हि सर्वतः ॥३३॥

अत्र धारणधारणयोर्भारवत्त्वसम्पादितयोः भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः स्खलितपदत्वं गुरुतरत्वञ्च प्रति पूर्ववाक्यार्थौ हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमनयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

"डु धाञ् भृञ् धारणपोषणयोः" इति गणपाठात् धाधातोरुभयार्थत्वं प्रतिपत्तव्यम् ॥३२॥

বাঙ্গালা—যিনি সর্ব্বদাই এই পৃথিবী ধারণ করিতেছেন, সেই লক্ষ্মী যাঁহার উদরে অবস্থান করিতেছিলেন ; সেই রাজমহিষীর প্রত্যেক পদক্ষেপে পদস্খলন কেন না হইবে এবং তিনি অলসা ও ভারাক্রান্তা কেন না হইবেন ।৩২।

अन्वयः—नृपप्रिया कमलालयाश्रितं दिने दिने मनोहरं वपुः किल अपुषत् । प्रदीपभृत् सुविमलकाचमोचिका हि सर्वतः अलं रुचिररुचिं तनोति ॥३३॥

नृपेति । नृपप्रिया राजमहिषी, कमलालयया गर्भरूपया लक्ष्मीदेव्या आश्रितम्, अतएव दिने दिने मनोहरम्, अधिकाधिकसौन्दर्य्यमापन्नम्, वपुः शरीरम्, किल, अपुषत् अधारयत् । प्रदीपं बिभर्त्तीति प्रदीपभृत् अभ्यन्तरे दीपशिखाधारिणी सुविमला असौ काचमोचिका मोचाकारा काचनिर्म्मिता घटी चेति सुविमलकाचमोचिका, सर्वतः समन्तात्, अलम् अत्यर्थम्, रुचिररुचिं सुन्दरप्रभां तनोति विस्तारयति ।

अत्र दृष्टान्तोऽलङ्कारः, पूर्ववदनुप्रासौ चेति संसृष्टिः ॥३३॥

বাঙ্গালা—রাজমহিষী গর্ভস্থ লক্ষ্মীদেবীকর্ত্তৃক অধিষ্ঠিত হইয়া প্রতিদিন অধিক অধিক সৌন্দর্য্যসম্পন্ন শরীর ধারণ করিতে লাগিলেন।

दिने दिने नृपवनितातनुश्रिया
नृपस्य च प्रमदविशेषधारया।
प्रजागणोन्नतिसुखशान्तिसम्पदा
सखीमुदा सह च स गर्भ ऐधत ॥३४॥
वयस्यया क्षतवरिवस्यया चिरं
महीभृता प्रणयभृता च सम्भृताः।
मदप्रदा बहुविधदोहदाः सदा
तदन्तिकं स्म परिहरन्ति नेप्सिताः ॥३५॥

ভিতরে প্রদীপযুক্ত নির্ম্মল কাচমোচা (কাচের ডুম) সকল দিকেই অত্যন্তসুন্দর প্রভা বিস্তার করিয়া থাকে ॥৩৩॥

অন্বয়ঃ—স গর্ভঃ নৃপবনিতাতনুশ্রিয়া নৃপস্য চ প্রমদবিশেষধারয়া প্রজাগণোন্নতিসুখ শান্তি সম্পদা সখীমুদা চ সহ দিনে দিনে ঐধত ॥৩৪॥

গর্ভমৃদ্ধিমাহ দিন ইতি। স গর্ভঃ, নৃপবনিতায়া রাজমহিষ্যাঃ, তনুশ্রিয়া দেহকান্ত্যা, নৃপস্য ভীষ্মকস্য চ, প্রমদবিশেষস্য আনন্দাতিরেকস্য ধারয়া প্রবাহেণ, প্রজাগণস্য উন্নতিসুখশান্তিভির্যুক্তা সম্পৎ উন্নতিসুখশান্তিসম্পৎ তয়া মধ্যপদলোপী সমাসঃ। সখীনাং মুদা হর্ষেণ চ সহ দিনে দিনে ঐধত অবর্দ্ধত গর্ভস্য লক্ষ্মীরূপত্বাদিত্যাশয়ঃ।

অত্র সহোক্তিরলঙ্কারো বৃত্ত্যনুপ্রাসশ্চেত্যনয়োঃ সংসৃষ্টিঃ ॥৩৪॥

বাঙ্গালা—*রাজমহিষীর দেহকান্তি, রাজার অতিরিক্ত আনন্দপ্রবাহ,* প্রজাগণের উন্নতি, সুখ, শান্তি ও সম্পদ্ এবং সখীগণের আমোদের সহিত সেই গর্ভটী দিনে দিনে বৃদ্ধি পাইতে লাগিল ॥৩৪॥

অন্বয়ঃ—চিরং ক্ষতবরিবস্যয়া বয়স্যয়া প্রণয়ভৃতা মহীভৃতা চ সম্ভৃতাঃ মদপ্রদাঃ ঈপ্সিতাঃ বহুবিধদোহদাঃ সদা তদন্তিকং ন পরিহরন্তি স্ম ॥৩৫॥

क्षितिप्रदेशादुपदेशतो गुरोः
विपेकमञ्चोत्थितमात्मभूप्रभम् ।
उपेत्य लेम् ु परिलुप्तधीर्वधूः
सुगन्धिभिर्लोलसतात्वमभ्यगात् ॥५७॥

अतएव सुमेरुतुल्यः, स नृपनन्दनो ज्येष्ठराजपुत्रः, तदा, 'ककुद्मी' इति सान्वयं यौगिकार्थसहितम्, नाम संज्ञाम्, दधार धारयामास । ककुदं स्वर्गमस्यास्तीति ककुद्मी इति व्युत्पत्तेरिति भावः ।

अत्र उक्तविधसान्वयं नामधारणं प्रति पूर्वार्द्धगतपदार्थो हेतव इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, आर्योपमा चानयोरङ्गाङ्गिभावेन सङ्करः ॥५६॥

বাঙ্গালা—দিক্‌পালগণের অংশধারী, বহুষ অবলম্বন, স্বর্ণযুক্ত, উন্নতদেহ এবং পৃথিবীপালক জ্যেষ্ঠ রাজপুত্র 'ককুদ্মী' এইরূপ যে নাম ধারণ করিয়াছিলেন, তাহা যোগার্থযুক্তই হইয়াছিল ॥৫৬॥

अन्वयः—वधूः गुरोः उपदेशतः क्षितिप्रदेशात् विपेकमञ्चोत्थितं आत्मभूप्रभं सुगन्धिभिः लेम् ु उपेत्य परिलुप्तधीः (सती) लोलसतात्वं अभ्यगात् ॥५७॥

क्षितीति । वधूः कापिहारवनिता, गुरोराचार्यस्य, उपदेशत उपदेशात्, क्षितिप्रदेशात् भूतलात्, विपेकमञ्चे अभिषेकपर्यङ्के उत्थितम्, आत्मभूप्रभं कामदेवतुल्यं कविमणम्, सुगन्धिभिः चन्दनादिभिर्द्रव्यैः, लेम् ुम्, उपेत्य गत्वा, परिलुप्तधीः कामाविर्भावात् नष्टकर्त्तव्यबुद्धिः सती, लोलसतात्वं चञ्चललताश्वारूप्यं कम्पमित्यर्थः, अभ्यगात् प्रापत् ।

अत्र आत्मभूप्रभमिति लुप्तोपमा, लोलसतात्वमिति निरङ्गं केवल-रूपकम्, पूर्वार्द्धेऽनुप्रासो चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥५७॥

বাঙ্গালা—কামদেবতুল্য মনোহরমূর্ত্তি রাজকুমার কুষ্ঠী আচার্য্যের

नृपात्मजस्याङ्गविलेपने तदा
तदीयलावण्यरुचीसरोऽन्तरे ।
नवाङ्गनानां कुचकोरकः क्षरः
मुखञ्च पुष्पाण्युदजानि पुस्फुटुः ॥५৮॥

---

উপদেশ অনুসারে ভূতল হইতে সেই মঞ্চের উপর উঠিলে, কোনও বারবনিতা তাঁহার অঙ্গে সুগন্ধি দ্রব্য লেপন করিতে যাইয়া নষ্টবুদ্ধি হইয়া চঞ্চল লতার ন্যায় কাঁপিতে লাগিল ॥৫৭॥

অন্বয়ঃ—তদা নৃপাত্মজস্য অঙ্গবিলেপনে তদীয়লাবণ্যরুচীসরোঽন্তরে নবাঙ্গনানাং কুচকোরকঃ ক্ষরঃ মুখঞ্চ (এতানি) উদজানি পুষ্পাণি পুস্ফুটুঃ ॥৫৮॥

নৃপেতি। তদা, নৃপাত্মজস্য রাজপুত্রস্য রুক্মিণঃ, অঙ্গবিলেপনে সুগন্ধিদ্রব্যৈরঙ্গলেপনে তদীয়ে কুমারসম্বন্ধিন্যৌ যে লাবণ্যরুচী লাবণ্যমণী তে এব সরো জলাশয়স্তস্য অন্তরে মধ্যে, নবাঙ্গনানাং বারতরুণীনাম্, কুচয়োঃ কোরকঃ কলিকেব স কুচকোরকঃ, ক্ষরঃ পাণিঃ, মুখং বদনঞ্চ, এতানি ত্রীণি, উদজানি জলজানি, পুষ্পাণি পদ্মানীত্যর্থঃ, পুস্ফুটুঃ বিকসন্তি স্ম।

অত্র লাবণ্যরুচ্যোঃ সরস্ত্বারোপঃ কুচাদৌ পদ্মত্বারোপে নিমিত্তমিতি পরম্পরিতরূপকমলঙ্কারঃ, "মুখং তব কুরঙ্গাক্ষি! সরোজমিতি নান্যথা" ইতি দর্পণোদাহরণ ইব দ্বিতীয়ার্দ্ধে সমাসাভাবেঽপি রূপকমপরকে-রবগমভাবাৎ, ছেকানুপ্রাসবৃত্ত্যনুপ্রাসৌ চেতি সংসৃষ্টিঃ।

"কলিকা কোরকঃ পুমান্" ইত্যমরঃ।

উদজানীতি "উদকস্যোদঃ" ইত্যাদিনা উদকশব্দস্য উদাদেশঃ ॥৫৮॥

বাঙ্গালা—রাজকুমার রুক্মীর অঙ্গে সুগন্ধি দ্রব্য লেপন করিবার

परिप्रलिप्ते ललितानुलेपने
गता मरीची रुरुचे विसारिणी ।
असह्यवेगा नु पतिंवरेन्दिरा
तनुं विषेकात् समपूरयत् पुरः ॥५८॥
गुरूपदिष्टोऽपि वपुर्विलेपने
परं व्यलम्बिष्ट नितम्बिनीगणः ।

---

সময়ে তাঁহার লাবণ্য ও প্রভারূপ সরোবরের মধ্যে বাহতরুণীগণের কলিকাতুল্য বদন, হস্ত ও মুখরূপ তিনটী পদ্ম প্রকাশ পাইতেছিল ॥৫৮॥

অন্বয়ঃ—ললিতানুলেপনে পরিপ্রলিপ্তে (সতি) বিসারিণী গতা মরীচী রুরুচে। অসহ্যবেগা পতিংবরা ইন্দিরা বিষেকাৎ পুরঃ (এব) তনুং সমপূরয়ৎ নু ॥৫৮॥

गतेति। ललितानुलेपने मनोहरानुलेपनद्रव्ये चन्दनादौ, परिप्रलिप्ते कुमारस्य सर्वाङ्गेषु अर्पिते सति, विसारिणी सर्वदिग्गामिनी, गता अपूर्वा, मरीची कुमारस्य कान्तिः, रुरुचे दिदीपे। अथोत्प्रेक्षते असह्येति। असह्यो वेगो अभ्यावेगो यस्याः सा, पतिं वृणीत इति पतिंवरा, इन्दिरा लक्ष्मीः, विषेकात् अभिषेकात्, पुरः पूर्वमेव, तनुं कविप्रदेशम्, समपूरयत् नु? आत्मना परिपूरितवती किम्?।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, क्रिकाद्युमाधीन संसृज्यते ॥५८॥

भृशं कराकर्षमृते वियुक्ततां
प्रयात्ययस्कान्तमणेरयः कथम् ॥६०॥

कुमारवामे नववामलोचना
सहस्रदृग्गोचरतां जगाम सा ।
लतां सलोलां ललनाख्य पुष्पिणीम्
अवश्यमुत्पश्यति लोक उत्सुकः ॥६१॥

---

अन्वयः—नितम्बिनीगणः गुरूपदिष्टः (सन्) अपि वधूविलेपने परं व्यलम्बिष्ट । अयः भृशं कराकर्षं ऋते कथं अयस्कान्तमणेः वियुक्ततां प्रयाति ॥६०॥

गुर्विति । नितम्बिनीनां वारवनितानां गणः, गुरुणा आचार्य्येण उपदिष्टः सन्नपि, वध्वा रुक्मिण्याः विलेपने, परमत्यन्तं व्यलम्बिष्ट विलम्बं कृतवान्; रुक्मिणीगात्रतो चन्दनापनयने विलम्बादिति भावः । तत्र हेतुमाह भृशमिति । अयो लौहं कर्तृ, भृशं सातिशयम्, करेण आकर्षणम्, आकर्षणम्, ऋते विना, कथम्, अयस्कान्तमणेः चुम्बकात्, वियुक्ततां विश्लेषम्, प्रयाति प्राप्नोति । नितम्बिनीगणस्य हस्तः खलु अयस्कान्तमणिरिव रुक्मिण्यां भृशं संसक्त इत्याशयः ।

अत्र साधर्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ॥६०॥

বাঙ্গালা—ক্রমে আচার্য্য কুমারবধূর অঙ্গে সুগন্ধি দ্রব্য লেপনের উপদেশ করিলেও, বারবনিতারা তাহাতে গুরুতর বিলম্ব করিল। কারণ, হস্তদ্বারা গুরুতর আকর্ষণ না করিলে, লৌহ চুম্বকপ্রস্তর হইতে বিশ্লিষ্ট হইবে কেন? ॥৬০॥

अन्वयः—कुमारवामे सा नववामलोचना सहस्रदृग्गोचरतां जगाम । लोकः उत्सुकः (सन्) सलोलां पुष्पिणीम् लतां ललनाख्य अवश्यमुत्पश्यति ॥६१॥

जहार साऽक्षीणि रसप्रतानिनी
प्रतानिनी पुष्पवतीव षट्पदान्।
न को जनः पश्यति हीनबालतां
न वा लतां काङ्क्षति को मधुव्रतः ॥६२॥

---

कुमारेति। कुमारस्य दक्षिणो वामे वामपार्श्वे, सा, नववामलोचना नवीनाङ्गना रुक्मिणी, सर्वदृशां बहुतरलोकलोचनानां गोचरतां विषयत्वम्, जगाम प्राप; सर्व एव लोकाः सौन्दर्य्यातिरेकात्तां ददृशुरित्यर्थः। लोकः, उत्सुकः उत्कण्ठितः सन्नेव, सलीलां सविलासाम्, पुष्पिणीं पुष्पवतीञ्च, लताम्, ललनां योषितञ्च, अवश्यं ध्रुवमेव उत्पश्यति अवलोकते।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, प्रस्तुताया ललनाया अप्रस्तुताया लतायाश्च उत्पश्यतीत्येकया क्रियया कर्म्मतयाभिसम्बन्धाद्दीपकञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते।

"स्त्रियः सुमनसः पुष्पम्" इति "स्याद्रजः पुष्पमार्त्तवम्" इति चामरः ॥६१॥

বাঙ্গালা—কুমারের বামপার্শ্ববর্ত্তিনী সেই নবাঙ্গনা সকল লোকের দৃষ্টির বিষয় হইয়াছিলেন। কারণ, মানুষ উৎকণ্ঠিত হইয়াই সলীলা ও পুষ্পবতী লতা ও রমণীকে অবশ্যই দেখিয়া থাকে ॥৬১॥

अन्वयः—पुष्पवती प्रतानिनी षट्पदानिव रसप्रतानिनी सा अक्षीणि जहार। को जनः हीनबालतां न पश्यति, को मधुव्रतो वा लतां न काङ्क्षति ॥६२॥

जहारेति। पुष्पवती कुसुमशालिनी, प्रतानिनी शाखापल्लवादिविस्तारवती लता, षट्पदान् भ्रमरानिव, रसप्रतानिनी अमृततया

समन्त्रकैः पापनिवारिवारिभिः
शुचिप्रियौ तावसिचद्द्विजः शुचिः ।
रिपोर्विवर्णा वरवर्णिनी च तत्
निशम्य दीनाऽसिचज्जलेन मेदिनीम् ॥६५॥

---

जलाढ्यौ, प्रवर्षुकां वारिधारावर्षिणीम्, वारिदपङ्क्तिं मेघमालाम्, अकरत् वाहुल्यातिशयात् कृतवान् ।

अतएवात्र अत्युक्त्यलङ्कारो वृत्त्यनुप्रासेन संसृज्यते ।

"वनस्पतिः समास्ते" इत्यमरः ।

स्नापयत इति "ग्लास्नावनुवमाञ्च" इति विकल्पाधिकारात् पक्षे न ह्रस्वः, प्रवर्षुकामिति "लष-पत-—" इत्यादिना उकञ्प्रत्ययः, तस्य च निष्ठादित्वात् प्रतताविवनस्पती इति कर्मणि न षष्ठी ॥६४॥

বাঙ্গালা—ক্রমে কৃষ্ণ ও তাঁহার ভার্য্যা সেই নির্ম্মল মঞ্চে অধিষ্ঠান করিলে, বারবনিতারা তাঁহাদিগকে স্নান করাইতে লাগিল, তাহা দেখিয়া তত্রত্য লোকেরা কৈলাসপর্ব্বতসঞ্জাত পরস্পর সংশ্লিষ্ট লতা ও বৃক্ষের উপরে বর্ষাকারিণী মেঘমালাকে স্মরণ করিতে লাগিল ॥৬৪॥

अन्वयः—शुचिः द्विजः समन्त्रकैः पापनिवारिवारिभिः शुचिप्रियौ असिचत्; रिपोः वरवर्णिनी च तत् निशम्य विवर्णा दीना च (सती) अश्रुजलेन मेदिनीं असिचत् ॥६५॥

अथ वारवनिता स्निग्धगन्धद्रव्यप्रक्षालनार्थं स्नापयन्ति स्म, वैधस्नपनन्तु कृत इत्याह समन्त्रकैरिति । शुचिः स्नानादिना पवित्रीभूतः, द्विजः कश्चिद्ब्राह्मणः, समन्त्रकैर्मन्त्रपाठसहितैः, पापनिवारिवारिभिः पापनाशकजलैः, शुचिः शृङ्गारः प्रियो ययोस्तौ पूर्णयौवनादिति भावः ; तौ दम्पती, असिचत् अभिषिक्तवान्, रिपोः शत्रुपक्षस्य, वरवर्णिनी अङ्गना

तमावसानं वसनं बभूवतुः
ग्रहीतुकामे युगपद्वधूश्रियौ ।
अपत्रपिष्णुः प्रथमा न सुस्थिरा
पराऽस्थिरा विग्रहमग्रहीत् समम् ॥६६॥

---

च, तत् रुक्मिणो राज्याभिषेचनम्, निशम्य लोकमुखादाकर्ण्य, विपक्षा उद्वेगेन मलिनमुखी, दीना कातरा च सती, अक्षिजलेन भाविपति-विनाशशङ्कया अश्रुजलेन, मेदिनीं भूमिम्, असिञ्चत् ।

अत्र रिपुवरवर्णिन्या अक्षिजलेन मेदिनीसेचनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, असिञ्चदित्येकया क्रियया तो मेदिनीमित्युभयोः कर्मतयाभिसम्बन्धात्तुल्ययोगिता चेत्युभयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च च्छेकानुप्रासेन संसृज्यते ।

“शृङ्गारः शुचिरुज्ज्वलः” इत्यमरः ।

असिञ्चदिति अद्यतन्यां द्वौ “अच् असु-वचि” इत्यादिना अङि रूपम् ॥६५॥

বাঙ্গালা—তদনন্তর কোন পবিত্র ব্রাহ্মণ অভিষেকমন্ত্রপাঠপূর্বক পাপনাশক জলদ্বারা সেই শৃঙ্গারপ্রিয় কুমারদম্পতিকে অভিষিক্ত করিলেন। তাহা শুনিয়া শত্রুপক্ষের স্ত্রীলোকগণ উদ্বেগে মলিনবদন ও কাতরচিত্ত হইয়া নয়নজলধারা ভূতল সিক্ত করিল ॥৬৫॥

अन्वयः—वधूश्रियौ युगपत् ( एव ) वसनं आवसानं तं ग्रहीतुकामे बभूवतुः । ( किन्तु ) अपत्रपिष्णुः सुस्थिरा च प्रथमा विग्रहं न अग्रहीत्, अस्थिरा परा तु समं (एव) विग्रहं अग्रहीत् ॥६६॥

तमिति । वधूः रुक्मिभार्या श्रीश्च लक्ष्मीश्चेति ते वधूश्रियौ, युगपत् एकदैव, वसनं युवराजोचितं वस्त्रम्, आवसानम् अभिषेकात् परं

पतिंवरां निर्म्मलमालधारिणीं
श्रियं समेतां बुबुधे वधूं बुधः ।
अबोधि मुग्धश्च पुनश्च रुक्मिणं
वरं वरीतुं किमितीयमिच्छति ॥६८॥

सति, सभ्यौ च तौ विदग्धमुग्धौ पण्डितसुन्दरौ चेति तयोः, गणः समूहः, तदा, इदं वक्ष्यमाणाम्, पुनर्द्विधा द्विप्रकारम्, ज्ञानम्, प्रलब्धवान् ।

अत्र छेकानुप्रासोऽलङ्कारः ॥६८॥

বাঙ্গালা—তদনন্তর মহিষীর মস্তকেও মুকুট সমর্পিত হইলে এবং তাঁহাদের দুই জনেরই অঙ্গে সমস্ত অলঙ্কার পরিধান করাইয়া দিলে, তখন সভাস্থিত পণ্ডিতগণ ও সুন্দর পুরুষগণ এই প্রকার জ্ঞান লাভ করিলেন ।৬৮।

अन्वयः—बुधः वधूं पतिंवरां समेतां निर्म्मलमालधारिणीं श्रियं बुबुधे । मुग्धश्च इयं पुनश्च रुक्मिणं वरं वरीतुं किं इच्छति इति अबोधि ॥६९॥

पतिमिति । बुध्यत इति बुधो बुद्धिमान् जनः, वधूं रुक्मिमहिषीम्, पतिं वृणीत इति पतिंवरा ताम्, समेतां समागताम्, निर्म्मलां मालां बिभर्त्तीति निर्म्मलमालधारिणी ताम्, श्रियं साक्षाल्लक्ष्मीम्, बुबुधे मेने ; मालाधारित्वादलौकिकसौन्दर्य्याच्चेति भावः । मुग्धो मूढश्च, द्विःपतिवरणसम्भावनान्मूढत्वमित्यभिप्रायः । इयं तरुणी, पुनश्च पुनरपि, रुक्मिणम्, वरम्, वरीतुम्, किम्, इच्छति, इति अबोधि सम्भावितवान् ; मालाधारणादित्याशयः ।

अत्र एकस्या वध्वा अनेकधोल्लेखात् रूपकोत्प्रेक्षायोगाच्च उल्लेखो नामालङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

पतिंवरेति "नाम्नि तॄभृ—" इत्यादिना खप्रत्यये "इच्छारुषोर्म्मोऽन्तः"

वपुर्महालङ्करणेन किङ्करैः
अलङ्कृतं रुक्मसुखेन रुक्मिणः ।
महीपतेर्नन्दनकान्तिनन्दिनः
शुभान्नवीनात् समशूशुभन्मुखम् ॥७०॥

---

इति नुकारागमः । मालभारिणीति "याकारौ स्त्रीकृतौ ह्रस्वः क्वचित्" इति मालाशब्दस्य ह्रस्वान्तता । वरीतुमिति "वृङ्वृञोऽपि—" इत्यादिना इटो दीर्घत्वम् ॥६९॥

বাঙ্গালা—স্বয়ং লক্ষ্মীদেবী পতিবরণ করিবার জন্যই যেন নির্মল মালা লইয়া আসিয়াছেন ইহা রুক্মিমহিষীর সম্বন্ধে বুদ্ধিমান্ লোকেরা মনে করিলেন, আর নির্বোধ লোকেরা মনে করিল যে, 'এই তরুণী কি আবারও পতিবরণ করিবার ইচ্ছা করিতেছে?' ॥৬৯॥

अन्वयः—किङ्करैः रुक्मसुखेन महालङ्करणेन रुक्मिणः वपुः अलङ्कृतं, (तथ) नवीनात् शुभात् नन्दनकान्तिनन्दिनः महीपतेः मुखं समशूशुभत् ॥७०॥

वपुरिति । किङ्करैर्भृत्यैः, रुक्मसुखेन स्वर्णालङ्कारादिना, महालङ्करणेन प्रशस्तभूषणेन, रुक्मिणो वपुः शरीरम्, अलङ्कृतं शोभितम्, तथालङ्करणम्, नवीनात् नूतनात्, शुभात् पुत्रस्य यौवराज्याभिषेकरूपात् मङ्गलव्यापारात्, नन्दनस्य पुत्रस्य कान्त्या शोभया नन्दति आनन्दमनुभवतीति तस्य, महीपतेः राज्ञो भीष्मकस्य, मुखं वदनमण्डलम्, समशूशुभत् सम्यक्शोभितवत् । अहो ! महदाश्चर्यमेतदिति भावः ।

अत्र कारणीभूतमलङ्करणं युवराजे, तत्कार्यभूतं मुखशोभनन्तु राजनि भीष्मक इति कार्यकारणयोर्भिन्नदेशवर्त्तित्वादसङ्गतिर्नामालङ्कारः पूर्ववदनुप्रासाभ्यां संसृज्यते ॥७०॥

जरन् यदा सन्ततवत्सवत्सलः
भुवः प्रदानं कृतवान् कृती नृपः ।
महामहीभारभरादिवापतत्
तदा पदाग्रेऽस्य कुमारमस्तकम् ॥७१॥

**বাঙ্গালা**—ভৃত্যেরা স্বর্ণালঙ্কারপ্রভৃতি উত্তম অলঙ্কারদ্বারা রুক্মীর শরীরটী অলঙ্কৃত করিয়াছিল; কিন্তু তাহা পুত্রের সৌন্দর্য্যদর্শনে আনন্দিতচিত্ত রাজা ভীষ্মকের মুখমণ্ডলকে নূতন মাঙ্গলিক ব্যাপারনিবন্ধন শোভিত করিল ॥৭০॥

**अन्वयः**—यदा सन्ततवत्सवत्सलः, कृती (च) जरन् नृपः भुवः प्रदानं कृतवान्; तदा कुमारमस्तकं महामहीभारभरादिव अस्य पदाग्रे अपतत् ॥७१॥

जरन्निति । यदा, सन्ततं सर्वदा वत्से पुत्रादौ वत्सलः स्नेहशीलः, कृती सर्वकार्य्यनिपुणश्च, जरन् वृद्धः, नृपो भीष्मकः, भुवो राज्यस्य प्रदानं रुक्मिणे समर्पणम्, कृतवान्; तदा, कुमारस्य युवराजस्य रुक्मिणो मस्तकम्, महान् यो मह्या राज्यस्य भारस्तस्य भराद्विन्यासादिव, अस्य नृपस्य भीष्मकस्य, पदाग्रे चरणसम्मुखे, अपतत्; रुक्मी भीष्मकपदे नमश्चकारेत्यर्थः ।

अत्र महामहीभारभरादिवेति हेतूत्प्रेक्षालङ्कारः वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः ।

"वर्षीयान् दशमी ज्यायान् जीनो जीर्णो जरन्नपि" इत्यमरः । "वत्सः स्निग्धे च पुत्रे च" इति हेमचन्द्रः ॥७१॥

**বাঙ্গালা**—সর্ব্বদা পুত্রবৎসল ও সর্ব্বকার্য্যে নিপুণ রাজা ভীষ্মক যখন যুবরাজ রুক্মীর হস্তে রাজ্য সমর্পণ করিলেন, তখন বিশাল পৃথিবীর ভারেই যেন রুক্মীর মস্তকটী ভীষ্মকের চরণসম্মুখে পতিত হইল ॥৭১॥

प्रकाशिताशीर्मुखजन्मनां मुखात्
रहोगतस्त्रैणकुलादुलुध्वनिः ।
जयध्वनिः स्वस्तिवचश्च सर्वतः
नरेन्द्रवर्गादुदतिष्ठदेकदा ॥७२॥
स्वनः स तौर्य्यत्रिकनिस्वनैः सह
समुच्चरंश्चत्वरसद्मतोऽभितः ।
रमाप्रदाने पवनेन विद्रुत-
समुद्रकल्लोलरवाननुवादयत् ॥७३॥

---

**अन्वयः**—मुखजन्मनां मुखात् प्रकाशिता आशीः, रहोगतस्त्रैणकुलात् उलुध्वनिः, सर्वतः जयध्वनिः, नरेन्द्रवर्गात् स्वस्तिवचश्च एकदा उदतिष्ठत् ॥७२॥

प्रकाशितेति । मुखादुत्पन्नयो वदनाज्जन्म येषां ते मुखजन्मानो ब्राह्मणास्तेषाम्, मुखात्, प्रकाशिता निर्गता, आशीराशीर्वादः, रहोगतं निर्जनस्थितं पटान्तरालगतमित्यर्थः यत् स्त्रैणकुलं स्त्रीसमूहस्तस्मात्, उलुध्वनिः, सर्वतः उक्तेतरेभ्यः सर्वेभ्यो जनेभ्यः, जयध्वनिः, नरेन्द्रवर्गात् राजसमूहात्, स्वस्तिवचः शुभमस्त्विति वाक्यञ्च, एकदा, उदतिष्ठत् ।

अत्र उदतिष्ठदित्येकया क्रियया आशीरादीनां कर्त्तृतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः प्रथमपादगतलाटानुप्रासेन संसृज्यते ॥७२॥

বাঙ্গালা—ব্রাহ্মণগণের মুখ হইতে নির্গত আশীর্ব্বাদ, অন্তরালস্থিত নারীগণ হইতে উলুধ্বনি, অন্য সকল ব্যক্তি হইতে জয়ধ্বনি এবং রাজগণ হইতে স্বস্তিবাক্য এক সময়েই উত্থিত হইল ।৭২।

**অন্বয়ঃ**—तदा चत्वर सद्मतः स स्वनः तौर्य्यत्रिकनिस्वनैः सह अभितः समुच्चरन् (सन्) रमाप्रदाने पवनेन विद्रुतसमुद्रकल्लोलरवान् अवादयत् ॥७३॥

प्रसूनवृष्टिर्निपपात रुक्मिणः
जनालिहस्तात् किल या तनूपरि ।
विनिःसृता भीष्मकपाणिपल्लवात्
हिरण्यवृष्टिर्युगपज्जिगाय ताम् ॥७४॥

---

स्वन इति । तदा, उच्चतरः, स स्वनो मिलितशब्दः, तौर्य्यत्रिकस्य नृत्यगीतवाद्यानां निस्वनैः शब्दैः सह; अभितः सर्वतः, समुच्चरन् विचरन् सन्, रमायाः लक्ष्मीदेव्याः, प्रदाने नारायणाय प्रदानकाले, पवनेन वायुना, विद्रुतस्य उद्वेलितस्य समुद्रस्य कल्लोलरवान् महातरङ्गशब्दान्, अवाहसत् उपहसितवान् ।

अत्रावहासेन सादृश्यसूचनादार्थोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

"तौर्य्यत्रिकं नृत्यगीतवाद्यम्" इत्यमरः ॥७३॥

**বাঙ্গালা**—সেই উচ্চতর শব্দ নৃত্য, গীত ও বাদ্যের শব্দের সহিত সকল দিকে বিচরণ করিতে থাকিয়া নারায়ণের হস্তে লক্ষ্মীদেবীকে সম্প্রদান করিবার সময়ে বায়ুসঞ্চালিত সমুদ্রের মহাতরঙ্গের শব্দকে উপহাস করিতেছিল ॥৭৩॥

**अन्वयः**—जनालिहस्तात् या प्रसूनवृष्टिः रुक्मिणः तनूपरि निपपात किल, भीष्मकपाणिपल्लवात् युगपत् विनिःसृता हिरण्यवृष्टिः तां जिगाय ॥७४॥

प्रसूनेति । जनालिहस्तात् लोकसमूहकरात्, या प्रसूनवृष्टिः पुष्पवृष्टिः, रुक्मिणो युवराजस्य तनोः शरीरस्योपरि, निपपात किल; भीष्मकस्य पाणिपल्लवात्, युगपदेकदैव, विनिःसृता विनिर्गता हिरण्यानां सुवर्णानां वृष्टिः, तां प्रसूनवृष्टिम्, जिगाय जितवती; अतिरेकादित्याशयः ।

प्रतर्पयन्तो हृदयं दयार्थिनः
स्तुतीरितैर्वन्दिजना ववन्दिरे ।
वसुप्रभूणां वसुधातले हि न
स्तुतेरभावो भवतीह कर्हिचित् ॥৩৫॥

अमुं किमु श्रीयपलायिता नवा
सरस्वतीतीव परोचितुं स्वयम् ।

अतएवात्र प्रसूनवृष्ट्यपेक्षया हिरण्यवृष्टेराधिक्यवर्णनाद्व्यतिरेका-
लङ्कारः ॥৩৪॥

**বাঙ্গালা**—লোকসমূহের হস্ত হইতে যে পুষ্পবৃষ্টি রুক্মীর দেহের উপরে পতিত হইল ; রাজা ভীষ্মকের হস্তপল্লব হইতে নির্গত সুবর্ণ বৃষ্টি সেই পুষ্পবৃষ্টিকে জয় করিল ॥৭৪॥

**अन्वयः**—दयार्थिनः वन्दिजनाः स्तुतीरितैः हृदयं प्रतर्पयन्तः ववन्दिरे । इह वसुधातले हि कर्हिचित् वसुप्रभूणां स्तुतेः अभावः न भवति ॥৩৫॥

प्रतर्पयन्त इति । दयार्थिनो युवराजस्यैव कृपाभिलाषिणः, वन्दिजनाः स्तुतिपाठकाः, स्तुतीरितैः प्रशंसावाक्यैः, हृदयं युवराजस्य मनः, प्रतर्पयन्तः सन्तोषयन्तः सन्तः, ववन्दिरे युवराजं सिषेविरे । इह वसुधातले हि, कर्हिचित्, वसुप्रभूणां धनस्वामिनाम्, स्तुतेः प्रशंसायाः अभावो न भवति, प्रायेण सर्वैरेव तस्याः करणादिति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारस्छेकानु-
प्रासेन संसृज्यते ॥৩৫॥

**বাঙ্গালা**—দয়াভিলাষী স্তুতিপাঠকেরা স্তুতিবাক্যে যুবরাজ রুক্মীর হৃদয় সন্তুষ্ট করিতে থাকিয়া তাঁহার বন্দনা করিতে লাগিল। কারণ, এই পৃথিবীতে কোন সময়েই ধনিগণের স্তুতিবাক্যের অভাব হয় না ॥৭৫॥

मुखे मुनीनाममनाक् प्रशंसतां
स्वतः सपत्नीगतमत्सरादगात् ॥७६॥
नृपः पुराणः करमेकधाऽनयत्
परं कुमारोऽप्यपरं ग्रहीष्यति।
अहो दरिद्रस्य विपत् पदे पदे
पुरोऽस्मरन् जानपदा जना इति ॥७७॥

अन्वयः—चपला श्रीः अमुं आश्रिता किमु न वा इति स्वयं परीक्षितुमिव सरस्वती स्वतः अमनाक् प्रशंसतां मुनीनां मुखे सपत्नीगतमत्सरात् अगात् ॥७६॥

अमुमिति। चपला चञ्चला, श्रीर्लक्ष्मीः, अमुं युवराजं रुक्मिणम्, आश्रिता किमु न वा, इति, स्वयमात्मना, परीक्षितुमिव, सरस्वती वाग्देवी, स्वत आत्मन एव प्रेरणया, अमनागत्यन्तं यथा स्यात्तथा, प्रशंसतां मुनीनां मुखे, सपत्नीगतो यो मत्सरो विद्वेषस्तस्मात्, अगादगमत्। अन्योऽपि समीपमुपेत्यैव परीक्षते।

अत्र परीक्षितुमिवेति फलोत्प्रेक्षालङ्कारस्य कानुप्रासस्य ेति संसृष्टिः। "किञ्चिदीषन्मनागल्पे" इति "मत्सरोऽन्यशुभद्वेषे" इति चामरः ॥७६॥

বাঙ্গালা—চঞ্চলা লক্ষ্মী আসিয়া ইহাকে আশ্রয় করিয়াছেন কি না ইহা পরীক্ষা করিবার জন্যই যেন সরস্বতী অত্যন্ত প্রশংসাকারী মুনিগণের সপত্নীগত বিদ্বেষনিবন্ধন আসিয়াছিলেন ॥৭৬॥

अन्वयः—पुराणः नृपः एकधा करं अनयत्, परं कुमारः अपि अपरं ग्रहीष्यति। अहो दरिद्रस्य पदे पदे विपत् इति जानपदाः जनाः पुरः अस्मरन् ॥७७॥

नृप इति। पुराणः प्राचीनः, नृपो भीष्मकः, एकधा एकप्रकारं राजग्राह्यमित्यर्थः, करं भागधेयम्, अनयत् अग्रहीत्, परमितोऽनन्तरम्,

ततश्च दीना नृपदानतापिताः
तयोस्तृतीयं प्रभुमीयुरीदृशम् ।
ग्रहेण दुःखञ्च सुखञ्च दानतः
इयं गतिर्जागतिकी हि सर्वतः ॥७८॥

कुमारो युवराजोऽपि, अपरं युवराजग्राह्यं करम्, ग्रहीष्यति । अहो इति विषादे, दरिद्रस्य पदे पदे विपत्, इति, जानपदा देशवासिनो जना, पुरा पूर्वम्, अब्रुवन् समाहमन्यन्त ।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टि ॥७७॥

**বাঙ্গালা**—প্রাচীন রাজা এক প্রকার কর ( খাজনা ) লইতেন, এখন আবার যুবরাজ অন্য প্রকার কর লইবেন। হায়! দরিদ্রের পদে পদেই বিপদ হইয়া থাকে, দেশবাসী প্রজারা প্রথমে এইরূপ মনে করিয়াছিল ॥৭৭॥

**अन्वय.**—ततश्च दीना नृपदानतापिता (सन्त) तयो तृतीय ईदृश प्रभु ईयु । ग्रहेण च दुःख दानतश्च सुख (स्यात) इयं हि सर्वत जागतिकी गति ॥७८॥

तत इति । ततश्च पूर्वविधकथनानन्तरञ्च, दीना दरिद्रा जना, नृपस्य भीष्मकस्य दानेन तापिता सन्त, तयोर्भीष्मकरुक्मिणोस्तृतीयम्, ईदृशं दातारमेव, प्रभुं राजानम्, ईयुरभिलषितवन्त, एतस्माद्द्वयादिव तस्मात्तृतीयादपि ईदृशलाभावश्यम्भावादिति भाव । ग्रहेण आत्मनः सकाशादन्यकर्तृकग्रहणेन च, दुःखं स्यात्, अतएव पूर्वश्लोके दुःखमुक्तमित्याशय । आत्मनि दानतश्च सुखं स्यात्, इयं हि, सर्वत सर्वत्र, जगत इयं जागतिकी जगद्वासिनां सर्वेषामेवेत्यर्थ, गतिरवस्था भवति ।

अत्र तृतीयस्य प्रभारिच्छाया असम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति-

अनुत्तमार्थैः परिपूरितोदरा
महोत्तमाम्नायनिष्फलोद्यमाः।
परं व्यपोद्भवविवेकिनो जनाः
असावधानस्य सुखेऽपि दुःखिता ॥७८॥

रलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥७८॥

**বাঙ্গালা**—তাহার পর দরিদ্র লোকেরা রাজার দানে সন্তুষ্ট হইয়া তাঁহাদের তৃতীয় এইরূপ আর একটী রাজা কামনা করিতে লাগিল। কারণ, নিজের নিকট হইতে কেহ কোন বস্তু লইলে দুঃখ হয়, আর নিজেকে দান করিলে সুখ হইয়া থাকে, ইহাই ত জগদ্বাসী লোকের মনের গতি ॥৭৮॥

**अन्वयः**—अविवेकिनः जनाः अनुत्तमार्थैः परिपूरितोदराः (अतएव) महोत्तमाम्नाय-निष्फलोद्यमाः (सन्तः) परं व्यपोद्भन्। असावधानस्य सुखे अपि दुःखिता (भवति) ॥७८॥

अनुत्तमेति। *अविवेकिनो विवेचनशून्या जनाः, अनुत्तमार्थैः प्रथमदत्तैर्निकृष्टखाद्यैः शाकादिभिरेव, परिपूरितानि उदराणि येस्ते, अतएव, महोत्तमानामाम्नमन्तरदत्तानामुत्कृष्टखाद्यानां पूपादीनाम् अशने भक्षणे निष्फल उद्यमो येषां ते तादृशाः सन्तः, परमत्यन्तम्, व्यपोद्भन् विमनसो अभवन्।* तथाहि, असावधानस्य पूर्वापरकर्त्तव्यावधानरहितस्य जनस्य, सुखेऽपि सुखस्थानेऽपि, दुःखिता भवति।

अत्र द्वितीयपादार्थं प्रति प्रथमपादगतपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, सामान्येन विशेषसमर्थनादर्थान्तरन्यासश्चानयोः परस्परनिरपेक्षतया संसृष्टिः ॥७८॥

गृहे गृहे नाट्यसमीक्षणक्षणा
अनेकदु:खप्रभृता जना अपि ।
भवाद्विमुक्तानिव योगिनस्तदा
प्रमेनिरे स्वान् सुखितान चिरादिव ॥८०॥
गृहमयाणि धरणीभृता गण
कुमारपाणावुपहारमर्पयन् ।

---

**বাঙ্গালা**—বিবেচনাশূন্য লোকেরা প্রথমেই নিকৃষ্ট খাদ্যদ্বারা উদর পরিপূর্ণ করিয়া ফেলিয়াছিল সুতরাং পরে আর উৎকৃষ্ট খাদ্য খাইতে পারিল না, অতএব তাহারা তখন অত্যন্ত বিষণ্ণ হইয়া পড়িল। কারণ, অসাবধান লোকের সুখ, সম্ভাবনাস্থলেও দুঃখ আসিয়া উপস্থিত হয় ॥৭৯॥

**অন্বয়** —अनेकदुःखप्रभृता जना अपि गृहे गृहे नाट्यसमीक्षणक्षणा ( सन्त ) योगिन भवात् विमुक्तान इव तदा स्वान चिरात् सुखितानिव प्रमेनिरे ॥८०॥

गृह इति । अनेकैर्दु:खै प्रभृता परिपूर्णा, जना अपि, गृहे गृहे नाट्यसमीक्षणेन नटकार्य्याभिनयदर्शनेन क्षणा उत्सव आनन्दो येषा त तादृशा सन्त, योगिनो जना, भवात् ससारात्, विमुक्तान् स्वानिव, तदा, स्वान आत्मन, चिरात्, सुखितान सञ्जातसुखानिव, प्रमेनिरे ।

अत्र श्रौतोपमाच्छेकानुप्रासयो ससृष्टिरलङ्कार ।

"निर्व्यापारस्थितौ कालविशेषोत्सवयो क्षण " इत्यमर ॥८०॥

**বাঙ্গালা**—যোগীরা যেমন সংসারমুক্ত আপনাদিগকে চিরসুখী বলিয়া মনে করেন সেইরূপ অনেক দুঃখে পরিপূর্ণ লোকেরাও গৃহে গৃহে অভিনয় দর্শন করিয়া আনন্দিত হইয়া আপনাদিগকে চিরসুখী বলিয়া মনে করিতে লাগিল ॥৮০॥

पुरातनाय प्रभवे निजां निजां
शिरःप्रणामेन ददाविवोन्नताम् ॥८१॥
अधना धनानि च भुवं भुवोऽर्थिनः
क्षुधिताः सुधावद्बहुविधान्नमाप्नुवन् ।
अवनीपतावभिनवे हि रुक्मिणि
कमलालयेव निखिलालयाऽभवत् ॥८२॥

---

अन्वयः—करदीभूता गणः गृहप्रयाणे कुमारपाणौ उपहारं अर्पयन् शिरःप्रणामेन पुरातनाय प्रभवे निजां निजां उन्नतां ददौ इव ॥८१॥

गण इति । करदीभूतां गणः राज्ञां समूहः, गृहप्रयाणे स्वस्वभवनगमनसमये, कुमारस्य युवराजस्य रुक्मिणः पाणौ हस्ते, उपहारम्, अर्पयन् वितरन्, शिरसां प्रणामेन अवनमनेन, पुरातनाय प्राचीनाय, प्रभवे राज्ञे भीष्मकाय, निजां निजाम् उन्नताम्, ददाविव । उन्नतानां शिरसाम् अवनमनेन तदुन्नतात्यागसूचनादिति भावः ।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः ॥८१॥

বাঙ্গালা—রাজগণ আপন আপন ভবনে যাইবার সময়ে যুবরাজ রুক্মীর হস্তে উপহার সমর্পণ করিয়া (নজর দিয়া) মস্তক অবনমন করায় প্রাচীন রাজা ভীষ্মককে যেন আপন আপন উচ্চতা দান করিলেন ॥৮১॥

अन्वयः—अधना धनानि, भुवोऽर्थिनः भुवं, क्षुधिताश्च सुधा-बहुविधान्नं आप्नुवन् । रुक्मिणि अभिनवे अवनीपतौ (सति) हि कमलालया निखिलालया इव अभवत् ॥८२॥

अधना इति । अधना दरिद्राः, धनानि, भुवोऽर्थिनो भूमियाचकाः, भुवं भूमिम्, क्षुधिताः क्षुधार्त्ताश्च जनाः, सुधावदमृतमिव बहुविधान्नम्, आप्नुवन् अलभन्त । रुक्मिणि भीष्मकज्येष्ठपुत्रे, अभिनवे, अवनीपतौ

स्वराज्ये सुप्राज्ये तनयमभिषिञ्चन्नरपतिः
न लेभेऽन्तः शान्तिं समुचितसुतादानरहितः ।
स्थितो यः संसारे यतिजनपितधर्म्मं स्पृहयति
मरुस्थाने तृष्णाड् मृगयति स मुग्धः किल जलम् ॥८३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिराज्याभिषेको नाम तृतीयः सर्गः ॥०॥

युवराजे सति हि, कमलालया लक्ष्मीः, निखिलं सर्व्वं भवनमेव आलय आश्रयो यस्याः सा तादृशी इव अभवत् ।

अत्र आप्नुवन्नित्येकया क्रियया अधनादीनां कर्त्तृतया धनादीनाञ्च कर्म्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः, कार्य्येण कारणसमर्थनादर्थान्तरन्यासः, वाच्या गुणोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनर्वृत्त्यनुप्रासेन संसृज्यते ।

मञ्जुभाषिणी वृत्तम्—"सजसा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥८२॥

आसीत् । अतएव, श्रान्तम् नसि, शान्तिं न लेभे । तथा च, यो जनः, संसारे गार्हस्थ्ये, स्थितः सन्, यतिभिर्जितेन्द्रियैः सन्न्यासिभिः लभितः अभीष्टो यो धर्मः शान्त्यादिगुणयुतम्, स्पृहयति लब्धुमिच्छति । स मुग्धो मूढो जनः, तृष्णाकु पिपासार्त्तः सन्, मरुस्थाने मरुभूमौ, जलम्, मृगयति अन्विष्यति किल । मरुभूमौ जलमिव संसारे शान्तिर्नास्तीति भावः ।

अत्र शान्तिलाभाभावं प्रति समुचित-सुता-दान-रहित इति पदद्वयार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, पराद्धे तु असम्भवद्वस्तुसम्बन्धा निदर्शना, च्छेकानुप्रासश्च त्वेतेषां मिथो निरपेक्षतया संसृष्टिः ।

"प्रभूतं प्रचुरं प्राज्यम्" इत्याद्यमरः । "मुग्धः सुन्दरमूढयोः" इति विश्वः ।

शिखरिणी वृत्तम्—"रसै रुद्रैश्छिन्ना य-म-न-स-भ-लागः शिखरिणी" इति लक्षणात् ॥८३॥

इति श्रीहेमचन्द्रतर्कवागीशविरचितायां रुक्मिणीहरणटीकायां विमलायां तृतीयः सर्गः ॥०॥

বাঙ্গালা—ভীষ্মকরাজা নিজের বিশাল রাজ্যে পুত্রকে অভিষিক্ত করিয়াও বিবাহযোগ্যা কন্যা রুক্মিণীকে যোগ্যপাত্রে দান করিতে না পারায় মনে শান্তি পাইতে লাগিলেন না। কারণ, যে লোক সংসারে থাকিয়া সন্ন্যাসীর শান্তি লাভ করিবার কামনা করে, সেই মূঢ় লোক পিপাসার্ত্ত হইয়া মরুভূমিতে জল অন্বেষণ করে ॥৮৩॥

---

## चतुर्थः सर्गः।

विषयस्य नृपश्चिरं रसान्
रसयंस्तद्विरतौ रतिं दधे।
खदितान्ननिवारितक्षुधः
सुलभा सापि सुधा सुधायते ॥१॥

अन्वयः—नृपः चिरं विषयस्य रसान् रसयन् तद्विरतौ रतिं दधे। खदितान्न-निवारित-क्षुधः सुलभा सा सुधा अपि सुधायते ॥१॥

विषयस्येति। नृपो भीमकः, चिरम्, विषयस्य भोग्यपदार्थस्य स्रक्चन्दनवनितादेः, रसान् स्वादान्, रसयन् अनुभवन्, तस्य अनुभवस्य विरतौ समाप्तौ, रतिमनुरागम्, दधे क्रमेण धारयामास। क्रमिक-तदनुभवैकाग्रचेः शान्त्यभावादिति भावः। तथा च, खदितेन भुक्तेन अन्नेन निवारिता क्षुत् क्षुधा यस्य तस्य तादृशस्य जनस्य, सुलभा सा प्रसिद्धा, सुधा अमृतमपि, सुधायते सुधेवाचरति वृथा भवतीत्यर्थः। क्षुधा सत्त्वे निकृष्टमप्यन्नं रोचते, तदसत्त्वे तु सुधापि सुधा स्यादितिवत् चिरविषयभोगेन नृपस्य पुनस्तद्भोगविराग एव जात इत्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानु-प्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः।

"रस आस्वादने" इति चौरादिको रसधातुः।

अस्मिन् सर्गे सुन्दरी नाम वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा" इति लक्षणात् ॥१॥

परिचिन्तयतश्चितश्चिरं
विषयस्तस्य सुखायते स्म न।
अधिकं द्युमणौ समुद्यति
न कियद्दीपयते हि दीपिका ॥२॥
सह वाञ्छया भुवः प्रभोः
तनुरासीत् क्रमशस्तथा कृशा।
महतोऽपि चिरं धराधुरां
तनुभारोऽपि सुदुःसहो यथा ॥३॥

**বাঙ্গালা**—ভীষ্মক চিরকাল বিষয়ভোগের ধন অনুভব করিয়া, ক্রমশঃ তাহার সমাপ্তিবিষয়ে মনোনিবেশ করিলেন। কারণ, অন্ন ভক্ষণ করায় যাহার ক্ষুধা নিবৃত্তি পাইয়া যায়, তাহার নিকট অনায়াসলভ্য অমৃতও কোন কাজে লাগে না ॥১॥

**अन्वयः**—विषयः चिरं चितं परिचिन्तयतः तस्य न सुखायते स्म। हि द्युमणौ अधिकं समुद्यति (सति) दीपिका कियत् न दीपयते ॥२॥

परीति। विषयो विषयभोगः, चिरं दीर्घकालम्, चितं परमात्मानम्, परिचिन्तयतः सर्वथा ध्यायतः, तस्य भीष्मकस्य, न सुखायते स्म न सुखं वितरति स्म। हि तथाहि, द्युमणौ सूर्ये, अधिकं समुद्यति उदयमाने सति, दीपिका क्षुद्रो दीपः, कियदपि वस्तु, न दीपयते न प्रकाशयति।

निजपूर्वदशाऽवसानतः
सकलस्नेहविहीनतावशात् ।
समकोचि शनैर्मुमुक्षतो
नृपतेर्दीपशिखेव वासना ॥४॥

---

अन्वयः—भुवः प्रभोः वासनया सह तनुः क्रमशः तथा क्षामा आसीत् । यथा चिरं धराधुरां वहतोऽपि तनुभारोऽपि गुरुः इव अभवत् ॥३॥

सहेति। भुवः प्रभोर्भूपालकस्य, वासनया विषयभोगेच्छया सह, तनुः शरीरम्, क्रमशः, तथा क्षामा, आसीत्। यथा, चिरम्, धराधुरां पृथिवीभारम्, वहतो धारयतोऽपि तस्य, तनोः शरीरस्य भारोऽपि, गुरुः इव अभवत्।

अत्र सहोक्तिरलङ्कारः।

धराधुरामिति धरायाः धूः धराधुरा ताम् "धुरनक्षस्य च" इति राजादित्वादत्प्रत्यये "स्त्रियामाद्या" इत्याप्प्रत्ययः ॥३॥

বাঙ্গালা—রাজা ভীষ্মকের বিষয়ভোগেচ্ছার সহিতই তাঁহার শরীর ক্রমশঃ সেইরূপ কৃশ হইল, যাহাতে তিনি চিরকাল পৃথিবীর ভার বহন করিলেও তৎকালে তাঁহার দেহের ভার বহন করাও অতিদুষ্কর হইয়াছিল ॥৩॥

अन्वयः—मुमुक्षतः नृपतेः वासना दीपशिखेव निजपूर्वदशावसानतः सकलस्नेहविहीनतावशात् (च) शनैः समकोचि ॥४॥

निजेति। मुमुक्षतो मुक्तिमिच्छतः, नृपतेर्भूपालकस्य, वासना विषयभोगेच्छा, दीपशिखेव, निजा स्वकीया या पूर्वदशा विषयासक्तावस्था वर्त्तिश्च तस्या अवसानतः वैराग्याद्दाहाच्च अवसानेन, सकलेषु पुत्रादिपरिजनेषु यः स्नेहो वात्सल्यं सकलस्नेहः समस्ततैलञ्च तस्य विहीनता-

घृणामप्यनपास्तसन्निधि-
मतिहृद्यामनुरागिणीं चिरम् ।
परिहाय नृपो नृपश्रियं
समुदासे स मुदा शनैः शनैः ॥५॥

---

दशात् वैराग्येण दाहेन च दाहित्वात् वर्तीः, शनैर्मन्दं मन्दम्, क्षणकोऽपि क्षीणा अभूत् ।

अत्र श्रौती पूर्णोपमालङ्कारः ।

"दशावस्था दीपवर्त्त्योर्वस्त्रान्ते भूम्नि योषिति" इति मेदिनी ।
"स्नेहस्तैलादिकरस-द्रव्ये स्यात् सौहृदेऽपि च" इति विश्वः ॥४॥

বাঙ্গালা—ভীষ্মকরাজা তখন মুক্তি কামনা করিতেছিলেন ; সুতরাং তাঁহার পূর্ব্ব অবস্থার অবসান ঘটিয়াছিল এবং সমস্ত পরিজনের উপরের বাৎসল্যও তিরোহিত হইয়াছিল, অতএব তাঁহার বিষয়ভোগের ইচ্ছা দীপশিখার ন্যায় ধীরে ধীরে ক্ষীণ হইতে লাগিল ॥৪॥

अन्वयः—स नृपः घृणां अपि अनपास्तसन्निधिं अतिहृद्यां चिरं अनुरागिणीं नृपश्रियं परिहाय मुदा शनैः शनैः (विषयान्) समुदासे ॥५॥

घृणामिति । स नृपो भीष्मकः, घृणामपि, न अपास्तो न परित्यक्तः सन्निधिः सामीप्यं यया ताम्, अतिहृद्याम् अतिशयेन प्रियाम्, चिरम्, विषयतासम्बन्धेन अनुरागः अस्या अस्तीति ताम्, अनुरागवतीमित्यर्थः, नृपश्रियं राजलक्ष्मीम्, परिहाय परित्यज्य, मुदा आनन्देनैव, शनैः शनैर्मन्दं मन्दम्, समुदासे विषयान् सम्यक् परितत्याज ।

अत्र श्लिष्टसाम्येन नृपनृपश्रियोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः, समुदा-समुदेति यमकेन संसृष्टी ।

हृदि सत्त्वगुणेन भूपतेः
उपसीवाधिकृते विवस्वता ।
अतिनिर्म्मलतेजसाश्रिते
परिनिःशेषमपासरत्तमः ॥६॥

---

"समुदासे" इति समुत्पूर्वकस्य "असु क्षेपणे" इत्यस्य धातोः "उपसर्गादस्यत्यूह्योर्वा" इति वचनादिस्वात् परोक्षाया आत्मनेपदप्रथमैकवचने रूपम् ॥५॥

বাঙ্গালা—ভৌমকরাজা সর্ব্বদা সন্নিহিতা, অতিমনোহরা ও অনুরাগের পাত্রী রাজলক্ষ্মীকে পরিত্যাগ করিয়া, আনন্দের সহিতই ধীরে ধীরে সমস্ত বিষয় পরিত্যাগ করিলেন ॥৫॥

अन्वयः—विवस्वता उषसि इव सत्त्वगुणेन भूपतेः हृदि अधिकृते अतिनिर्म्मलतेजसा आश्रिते (च सति) परिनिःशेषं तमः अपासरत् ॥६॥

हृदीति । विवस्वता सूर्य्येण, उषसि प्रभातकाल इव, सत्त्वगुणेन, भूपतेर्भौमकस्य, हृदि चित्ते, अधिकृते सति, अतिनिर्म्मलतेजसा सौरेण चिन्मयेन च, आश्रिते च सति, परिनिःशेषं समग्रम्, तमः तमोगुणजनितमोहः अन्धकारश्च, अपासरत्तिरोहितमभवत् ।
अत्र पूर्णोपमालङ्कारः ॥६॥

বাঙ্গালা—প্রভাতকালে সূর্য্য উদয় পাইলে তাঁহার নির্ম্মল তেজে যেমন সমস্ত অন্ধকার তিরোহিত হয়, তেমন ভৌমকরাজার চিত্ত সত্ত্বগুণে অধিকৃত হইলে অতিনির্ম্মল ব্রহ্মতেজে তাঁহার সমস্ত মোহ তিরোহিত হইল ॥৬॥

पवनेन परिष्कृतेऽथवा
विमलज्ञानविकाशनेन च ।
लघुना रजसा तदास्पदं
प्रतिपेदे नृपतेर्न मानसे ॥७॥
विफलाङ्गवनाद्वनाश्रमं
स्पृहयामास नृपो रहःप्रियः ।
अपि कर्म्मणि दग्धं नैऽग्नौ
भविता यत् फलमेव केवलम् ॥८॥

---

७। अन्वयः—अथवा पवनेन (इव) विमलज्ञानविकाशनेन परिष्कृते च नृपतेः मानसे तदा लघुना (अपि) रजसा आस्पदं न प्रतिपेदे ॥७॥

भीष्मकस्य रजोगुणोऽपि निवृत्त इत्याह पवनेनेति । अथवा, पवनेन वायुना इव, विमलज्ञानस्य शुद्धसात्त्विकज्ञानस्य विकाशनेन प्रकाशेन च, परिष्कृते निर्म्मलीकृते, नृपतेर्भीष्मकस्य, मानसे चित्ते, चत्वरे इवेति भावः । तदा, लघुना अल्पेनापि, रजसा रजोगुणेन धूल्या च, आस्पदं प्रतिष्ठा, न प्रतिपेदे न लेभे ।

अत्रापि पूर्णोपमालङ्कारः ॥७॥

বাঙ্গালা—এবং বায়ু পরিস্কৃত প্রাঙ্গণে যেমন ধূলি প্রতিষ্ঠা লাভ করিতে পারে না, তেমন নির্ম্মলজ্ঞানপরিস্কৃত ভীষ্মকের চিত্তে এখন অল্প রজোগুণও প্রতিষ্ঠা লাভ করিতে পারে নাই ॥৭॥

अन्वयः—रहःप्रियः नृपः विफलात् अङ्गवनात् वनाश्रमं स्पृहयामास । यत् (तत्र) कर्म्मणि दग्धे अग्नौ अपि केवलं फलमेव भविता ॥८॥

तनयाप्रतिपादनावधि
गृहमेधीभवितुं प्रभावुकैः।
स्वजनैर्बहुधा प्रबोधितः
बहुविघ्ना हि सतां सती क्रिया ॥९॥

---

विफलादिति। रहःप्रियो निर्जनदेशप्रियः, नृपो भीष्मकः, विफलात् तत्त्वज्ञानलाभसम्भावनाशून्यात्, भवनाद्गृहस्थाश्रमात्, वनाश्रमं वान-प्रस्थाश्रमम्, स्पृहयामास गन्तुमियेष। यद्यस्मात्, तत्र वनाश्रमे, कर्म्मणि श्रवणमननादौ, फलं तत्त्वज्ञानलाभः, महापुरुषाणां दर्शने, फलं पुण्यप्राप्तिः, अशनेऽपि भोजने च, फलं पनसाम्रादिफलप्राप्तिः, केवलम्, भविता।

अत्र शब्दश्लेषमूलकानुप्रासयोः संसृष्टिरलङ्कारः।

"फलं हेतुकृते फलम्" इत्यमरः ॥८॥

বাঙ্গালা—ক্রমে নির্জনপ্রিয় ভীষ্মকরাজা বিফল গৃহস্থাশ্রম হইতে বানপ্রস্থাশ্রমে যাইবার ইচ্ছা করিলেন। যেহেতু, সে আশ্রমে কার্য্যে, দর্শনে ও ভোজনে কেবল ফলই হইবে ॥৮॥

अन्वयः—प्रभावुकैः स्वजनैः तनयाप्रतिपादनावधि गृहमेधीभवितुं बहुधा प्रबोधितः, सतां सती क्रिया हि बहुविघ्ना ॥९॥

तनयेति। प्रभावुकैर्माङ्गलिकस्वभावैः स्वजनैः, तनयायाः कन्यायाः रुक्मिण्याः, प्रतिपादनावधि दानपर्य्यन्तम्, गृहमेधीभवितुं गृहस्थ-भावेन स्थातुम्, बहुधा, प्रबोधितो भीष्मको ज्ञापितः। हि तथाहि, सतां सज्जनानाम्, सती क्रिया अभ्यर्हितं कार्य्यम्, बहवो विघ्ना यस्यां सा तादृशी भवति।

रुरुचे रुचिरस्य नैव तत्
वचनं प्रत्युत भीतिमावहत् ।
नहि सत्पथगामुको जनो
गतकान्तारमुपैति बुद्धिमान् ॥१०॥

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्यनेषां संसृष्टिः ।

प्रभावुकेरिति "ऋकमगम—" इत्यादिना ताच्छील्ये उकञ् ॥९॥

বাঙ্গালা—তৎকালে মন্ত্রনার্থী স্বজনেরা যাইয়া রুক্মিণীর বিবাহ পর্য্যন্ত গৃহস্থ থাকিবার জন্য ভীষ্মকরাজাকে বহু প্রকারে উপদেশ দিয়াছিল। কারণ, সজ্জনের সৎকার্য্যে বহুতর বিঘ্নই হইয়া থাকে ।৯।

অন্বয়:—রুচিরস্য তৎ বচনং নৈব রুরুচে, প্রত্যুত ভীতিং আবহৎ। সত্পথগামুকঃ বুদ্ধিমান জনঃ গতকান্তারং নহি উপৈতি ॥১০॥

রুরুচ ইতি। রুচিরস্য সুন্দরমপি, তৎ স্বজনবচনম্, নৈব রুরুচে भीष्मकस्य रुचिं न खलु जनयामास। प्रत्युत वैपरीत्येन, भीतिम् भ्रान्तिभयमेव, आवहत् अजनयत्। तथाहि, सत्पथं गन्तुं शीलमस्येति सत्पथगामुकः, बुद्धिमान् जनः, निर्बोधस्तु स हित-
৫ नैरपेक्ष्येणैव परवाक्यं शृणोतीति भावः। गतकान्तारम् अतीतदुर्गम-
পথম্, নহি উপৈতি পুনর্ন গচ্ছতি।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानु-प्रासेन संसृज्यते।

"महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम्" इत्यमरः ॥१०॥

বাঙ্গালা—স্বজনবর্গের সেই সকল বাক্য অতিমধুর হইলেও তাহাতে ভীষ্মকরাজার অভিরুচি হইল না; বরং তাঁহার ভয়ই জন্মাইল।

बलवत् प्रतिकूलगामिनि
सरसि प्राज्यजवे च वारिधि ।
वचसश्च तरेश्च नोदने
ननु कर्त्तुः श्रम एव केवलम् ॥११॥
विमुखं नियतं विजानती
जनता नान्यकथञ्जनेश्वरम् ।

---

কারণ, সৎপথগামী বুদ্ধিমান্ লোক (কেবল পরের কথায়) অতিক্রান্ত দুর্গমপথে পুনরায় যান না ॥১০॥

अन्वयः—बलवत् प्रतिकूलगामिनि प्राज्यजवे च मनसि वारिधि च वचसश्च तरेश्च नोदने ननु कर्त्तुः केवलं श्रम एव (भवति) ॥११॥

ननु कथं तद्वचनं न कथय इत्याह बलवदिति। बलवदत्यन्तम्, प्रतिकूलं विपरीतदिशं गच्छतीति तस्मिन्, प्राज्यः प्रभूतो जवो वेगो यस्य तस्मिन्, मनसि, वारिधि जले च, वचसः अभिमतवाक्यस्य च, तरेर्नौकायाश्च, नोदने प्रेरणे, अभिधाने चालने चेत्यर्थः, नन्वित्यवधारणे प्रियसम्बोधने वा, कर्त्तुर्वक्तुश्चालयतुश्च, केवलं श्रम एव, भवति। तदाभिमुख्याभावादग्रसरत्वासम्भवात् चेत्याशयः।

अत्र प्रस्तुतस्य वचसः अप्रस्तुतायाः तरेश्च नोदनरूपैकधर्माभिसम्बन्धाद्दीपकमलङ्कारः क्रमेणोभयाभिधानाद्यथासंख्यमलङ्कारश्चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

"बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे" इत्यमरः ॥११॥

বাঙ্গালা—অত্যন্তপ্রতিকূলগামী ও গুরুতরবেগশালী মনে ও জলে বাক্য ও নৌকা চালাইতে গেলে বক্তা ও চালয়িতার কেবল পরিশ্রমই হইয়া থাকে ॥১১॥

भवतीह कथा वृथैव चेत्
ननु तूष्णीम्भवनं तदोचितम् ॥१२॥
यतते च सतीं क्रियां परं
परिरोद्धुं न विरुद्धबुद्धिमान्।
विनिवेशयितुं वनेषु यत्
भवनीयं समुपादिशत् सुधीः ॥१३॥

---

अन्वयः—जनता जनेश्वरं नियतं विमुखं विजानती (सती) न अन्वरुधत्। इह चेत् कथा वृथैव भवति, तदा तूष्णीम्भवनं ननु उचितम् ॥१२॥

विमुखमिति। जनता अपरजनसमूहः, जनेश्वरं राजानं भीष्मकम्, नियतं ध्रुवमेव, विमुखं गार्हस्थ्याश्रमपराङ्मुखं विजानती विशेषेणावगच्छन्ती सती, न अन्वरुधत् गार्हस्थ्यार्थं अनुरोधं न कृतवती। तथाहि, इह चेद्यदि, कथा वाक्यम्, वृथा निष्फलमेव भवति। तदा, तूष्णीम्भवनं ननु मौनावलम्बनमेव, उचितम्।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो हत्यनुमावेन सद्गच्छते।

जनतेति "ग्रामजने"त्यादिना समूहार्थे तप्रत्ययः ॥१२॥

বাঙ্গালা—রাজা গৃহস্থাশ্রমের প্রতি নিশ্চয়ই পরাঙ্মুখ হইয়াছেন ইহা বিশেষরূপে জানিয়া, অন্যান্য লোক সে বিষয়ে আর তাঁহাকে অনুরোধ করিল না। কারণ, কথা যদি নিষ্ফলই হয় তবে সেখানে নীরব থাকাই উচিত ॥১২॥

अन्वयः—विरुद्धबुद्धिमान् (जनः) परं सतीं क्रियां परिरोद्धुं न यतते च। यत् सुधीः न भवनीयं वनेषु विनिवेशयितुं उपादिशत् ॥१३॥

अथ सारथिना पुरस्कृतं
क्षितिनाथानुमतेन तत्क्षणम्।
गहने गमनाय वार्द्धक-
विकलाङ्गः स रथाङ्गमाश्रयत् ॥१४॥

---

यतत इति। विशुद्धबुद्धिमान् खलतादिदोषशून्यबुद्धिशाली जनः, परम् अन्यं जनम्, सतीं क्रियां सत्कार्य्यम्, परिरोद्धुं निवारयितुं न यतते च। यद्यस्मात्, सुधीः सुबुद्धिर्जनः, तमवनीशं राजानं भीष्मकम्, वनेषु तपोवनेषु, विनिवेशयितुं प्रेषयितुमेव, उपादिशत् पुत्रादीन् उपदिष्टवान्।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः।

रुधधातोर्द्विकर्म्मकत्वात् परं सतीं क्रियामित्युभयोरपि कर्म्मत्वम्। ननु "न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इत्यनुशासनविरोधात् कथं विशुद्धबुद्धिमानित्यत्र मत्वर्थीयो मतुः विशुद्धा बुद्धिर्यस्येति बहुव्रीहिणैव तदर्थप्रतिपत्तिसिद्धेरिति चेन्न, अत्र प्रशंसायां मत्वर्थीयप्रत्ययात् बहुव्रीहिणा च प्रशंसार्थस्य वक्तुमशक्यत्वात् अतएव हि बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इत्यभिधानात् नीलोत्पलवत् सर इति गोपीनाथेनोदाहृतत्वाच्च। मुनिभेदेन वनभेदात् वनेष्विति बहुवचनम् ॥१३॥

বাঙ্গালা—বিশুদ্ধবুদ্ধিযুক্ত মানুষ অন্যের সৎকার্য্যের বাধা দিতে যত্ন করেন না। যেহেতু, সদ্বুদ্ধিসম্পন্ন জনগণ ভীষ্মকরাজাকে তপোবনে প্রেরণ করিবারই উপদেশ দিয়াছিলেন ॥১৩॥

अपरो न बभूव भूपतेः
सहचारी विपिनप्रवेशने ।
विरहार्त्तजनस्य केवलं
जललोलाविललोचनावली ॥१५॥

---

अन्वयः—अथ वार्द्धकविकलाङ्ग स वने गमनाय क्षितिपात्यानुमतेन सारथिना तत्क्षण पुरस्कृत प्रताङ्ग आरुहत् ॥१४॥

अथेति। अथ वार्द्धकेन जरया विकलानि स्वस्वकार्य्यापटूनि अङ्गानि यस्य सः, अतएव पद्भ्यां गमनोचितेऽपि रथाश्रयणमिति भावः, स भीष्मकः, वने तपोवने, गमनाय, क्षितिनाथेन तदानीन्तनेन राज्ञा रुक्मिणा, अनुमतेन आदिष्टेन सारथिना, तत्क्षणं तस्मिन्नेव क्षणे, पुरस्कृतं सम्मुखमानीतम्, प्रताङ्गं रथम्, आश्रयत् आरोहत् ।

अत्र प्रताङ्गाश्रयं प्रति वार्द्धकविकलाङ्गपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः पूर्ववदनुप्रासाभ्यां संसृज्यते ।

"प्रताङ्गः स्यन्दनो रथ" इत्यमरः ॥१४॥

ব্যাখ্যা—তদনন্তর যুবরাজ রুক্মীর আদেশ অনুসারে সারথি সেই সময়েই একখানি রথ আনিয়া সম্মুখে উপস্থাপিত করিল, তখন জরাবিকলাঙ্গ ভীষ্মকরাজা তপোবনে যাইবার জন্য সেই রথে আরোহণ করিলেন ॥১৪॥

অন্বয়:—অপর বিপিনপ্রবেশনে ভূপতে সহচারী ন বভূব। (কিন্তু) কেবল বিরহার্ত্তজনস্য জললোলাবিললোচনাবলী (সহচারিণী বভূব) ॥১৫॥

अपर इति। अपरः अन्यो जन, विपिनप्रवेशने तपोवनगमने, भूपतेर्भीष्मकस्य, सहचारी न बभूव। किन्तु केवलम्, विरहेण भीष्मकस्य विच्छेदेन आर्त्तः पीड़ितो यो जनस्तस्य, जलेन अश्रुणा लोलानां

विषयं विजहद्यतो ययौ
नृपतिः पातितपातकाहितः ।
तत एव पुरौकसां दृशः
विषयीचक्रुरमुं नहीर्ष्यया ॥१६॥

---

चञ्चलानाम् आविलानामप्रसन्नानाञ्च लोचनानां चक्षुषाम् आवली श्रेणिरेव सहचारिणी बभूवेति लिङ्गव्यत्ययेनान्वयः।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः ॥१५॥

বাঙ্গালা—ভীমকরাজার তপোবন-গমনের সময় অন্য কোন লোকই তাঁহার সহচর হয় নাই। তবে তাঁহার বিরহদুঃখে দুঃখিত লোকদিগের অশ্রুপ্লাবিত নয়নগুলি কেবল সহচর হইয়াছিল ॥১৫॥

अन्वयः—पातितपातकाहितः नृपतिः यतः विषयं विजहत् (सन्) ययौ। तत एव पुरौकसां दृशः ईर्ष्यया (इव) अमुं नहि विषयीचक्रुः ॥१६॥

विषयमिति। पातिताश्चान्द्रायणादिना युद्धेन च विनाशिताः पातकानि पापानि अहिताः शत्रवश्च येन स तादृशः, नृपतिर्भीमकः, यतो यस्माद्धेतोः, विषयं स्रक्चन्दनवनितादिभोग्यपदार्थम्, विजहत् वैराग्येण परित्यजन् सन् ययौ तपोवनं प्रति प्रतस्थे। तत एव हेतोः, पुरं राजधान्येव ओकः आश्रयो येषां तेषां पुरवासिनामित्यर्थः, दृशो नयनानि, ईर्ष्यया इव, अमुं नृपतिम्, नहि विषयीचक्रुः न खलु गोचरीकृतवत्यः। परित्यज्यमानो हि परित्यजन्तमपि परित्यजतीति भावः। तपोवनाय गच्छन् राजा पुरवासिनां दृष्टिविषयमतिचक्रामेति निष्कर्षः।

अत्र ईर्ष्ययेवेति इवशब्दाभावात् प्रतीयमाना हेतूत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृज्यते ॥१६॥

(কুলকারম্ভঃ)

শ্রুতিচারুতরস্রুতিস্বনৈঃ
অপি সাম্নামবিগীতগীতিভিঃ।
বহুহব্যজধূমসংস্রবৈঃ
অতিদূরাদপি সূচিতাশ্রমে ॥১৩॥
অবশিষ্টকুশান্ সমগ্রতা
মৃদু শৃঙ্গৈর্লিখতা জটান্তরম্।

**বাঙ্গালা**—পাপনাশক ও শত্রুহন্তা ভীষ্মকরাজা যেহেতু বিষয় পরিত্যাগ করিয়া তপোবনের দিকে গমন করিতে লাগিলেন; সেই হেতুই পুরবাসিগণের দৃষ্টি ঈর্ষ্যা বশতই যেন তাঁহাকে আর বিষয় করিল না ॥১৬॥

**অন্বয়ঃ**—শ্রুতিচারুতরস্রুতিস্বনৈঃ সাম্নাং অবিগীতগীতিভিঃ বহুহব্যজধূমসংস্রবৈঃ অপি অতিদূরাৎ অপি সূচিতাশ্রমে, অবশিষ্টকুশান্ সমগ্রতা. মৃদু শৃঙ্গৈঃ লিখতা জটান্তরম্-

. অথ পঞ্চভিঃ শ্লোকৈঃ কুলকেন তপোবনং বর্ণয়ন্ ভীষ্মকস্য তথা-প্রবেশমাহ শ্রুতীতি। শ্রুতিচারুতরাঃ শ্রবণমধুরা যে শ্রুতিস্বনাঃ আম্নাতবেদধ্বনয়স্তৈঃ, সাম্নাম্, অবিগীতগীতিভিঃ অনিন্দিতগানৈঃ, বহবো হব্যজা হবনীয়দ্রব্যদাহজাতা যে ধূমাস্তেষাং সংস্রবৈঃ ঊর্দ্ধ-গামিনীভিঃ ধারাভিরপি চ, অতিদূরাদপি সূচিতা বিদ্যমানতয়া জ্ঞাপিতা আশ্রমা যস্য তস্মিন্। অত্র সূচিতা ইত্যেকয়া ক্রিয়য়া শ্রুতিস্বনাদীনাং কর্তৃতয়াভিসম্বন্ধাত্তুল্যযোগিতালঙ্কারঃ ॥ অবশিষ্টকুশান্ হোমাদ্যবশেষ-

**বাঙ্গালা**—ক্রমে ভীষ্মকরাজা তপোবনে উপস্থিত হইয়া রথমধ্য হইতে অবতরণ করিলেন, তখন বেগবান্ আনন্দাশ্রুজলে তাঁহার বক্ষঃস্থল প্রক্ষালিত হইতে লাগিল এবং রাজার বিরহে সারথির গুরুতর

मुनिबालककृष्टकेशर-
मृदुकण्डूयनमुद्रितेक्षणैः ।
अपि केशरिभिर्विनिश्चलैः
परिविश्वस्तसमीक्षितान्तरे ॥२०॥
विरहाद्धि समारथैरथ
रथमध्याद्भुवनेश्वरो वनी ।

---

"विपदं शक आखुभुक्" इत्यमरः ॥ मुनिबालकैः क्रष्टा आकृष्टाः केशरा येषां ते च ते मुनिबालकानामिव यानि मृदुकण्डूयनानि तैर्मुद्रितानि ईषन्मुद्रितानि नयनानि येषां तैः, विनिश्चलैर्निष्पन्दैः, केशरिभिः सिंहैरपि, परिविश्वस्तसमीक्षतं समन्तादतिशयेन विश्वासास्पदीकृतम् अन्तरं मध्यदेशो यस्य तस्मिन् । तादृशैरपि सिंहैः मुनिबालकानामप्यकिञ्चित्करत्वादिति भावः । अत्र समासोक्तिरलङ्कारः ॥ वनी वनविशिष्टतपोवने, भुवनेश्वरो राजा भीष्मकः, रथवत्या वेगशालिन्या,

আশ্রমগুলি সূচিত হইতেছিল। শান্তিসেবী সন্ন্যাসীরা বিভিন্ন তপোবন হইতে আপনা আপনি উপস্থিত হইয়াছিলেন, তখন কোন কোন হরিণ শৃঙ্গদ্বারা মৃদু মৃদু ভাবে তাঁহাদের জটা কণ্ডূয়ন করিতেছিল এবং কতকগুলি হরিণ হোমের অবশিষ্ট কুশ ভক্ষণ করিতেছিল। এহেন হরিণগণে তপোবন শোভা পাইতেছিল। মুনিরা প্রজ্বলিত হোমাগ্নিতে গুড়মিশ্রিত খই নিক্ষেপপূর্ব্বক তাহা দেবগণকে নিবেদন করিয়াছিলেন, তাহার অনেক খই আগুনের বাহিরে আসিয়া পড়িয়াছিল। তপোবনের বড় বড় বিড়াল কপোতশাবকগণের সহিত মিলিত হইয়া আনন্দসহকারে তাহা ভক্ষণ করিতেছিল। স্থানে স্থানে সিংহ বসিয়া

अवततार दृगम्बुधारया
रयवत्या विमलीकृताम्बरः ॥२१॥
(कुलकं समाप्तम्)

मुनयो नयपारगा नृपम्
अथ सं वर्द्धयितुं समाययुः ।
भवदृशं नमेकधर्म्मणां
न खलु प्रीणयते हि कं जनम् ॥२२॥

---

मुनिबालकाकृष्टकेशरमृदुकण्डूयनमुदितैः विनियन्त्रैः केशरिभिः अपि परिविम्बित-तमोविलासान्तरे, अन्ते, भुवनेश्वरः रयवत्या दृगम्बुधारया विमलीकृताम्बरः (सन्) विरहार्दित-सारथेः रथमध्यात् अवततार ॥१७—२१॥

दृगम्बुधारया तपोवनमाहात्म्यानन्दात् निर्गताश्रुस्रोतसा, विमलीकृतं प्रक्षालितम् अम्बरं वक्षोमध्यदेशो यस्य स तादृशः सन्, विरहेण भावि-राजविच्छेदेन अर्द्दितः पीड़ितः सारथिर्यस्य तस्मात्, रथमध्यात्, अवततार अवतीर्णवान् । अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः । "रंहस्तरसी तु रयः स्यदः । जवः" इत्यमरः । अवततारेति "वष्टि भागुरि-रल्लोपमवाप्योरुपसर्गयोः" इति अवशब्दस्याकारलोपः ॥१७—२१॥

বা গমন করিয়া রহিয়াছিল, তখন মুনিবালকেরা যাহার কোন কোন সিংহের জটা ধরিয়া টানিতেছিল এবং মৃদু মৃদু ভাবে কোন কোন সিংহের গাত্র কণ্ডূয়ন করিতেছিল, তাহাতে সেই সকল সিংহ নয়ন মুদ্রিত করিয়া রহিয়াছিল, ইহাতে সেই তপোবনের অভ্যন্তরদেশগুলি বিশেষ বিশুদ্ধ ছিল ॥১৭—২১॥

अन्वयः—अथ नयपारगाः मुनयः तं नृपं संवर्द्धयितुं आययुः । हि एकधर्म्मणां भवदृशं कं जनं न खलु प्रीणयति ॥२२॥

अभिवादयता दयालुना
लुनता स्वप्रभया भयं भुवः।
दृढभक्तिसमार्द्रया दृशा
ददृशे योगिगणो युयुत्सुना ॥२३॥

---

मुनय इति। अथ भीष्मकस्य रथादवतरणानन्तरम्, नयपारगाः सर्व्वनीतिनिपुणाः, अतएव नवागतराजसंवर्द्धनायागमनमिति भावः। मुनयः, तं नृपं भीष्मकम्, संवर्द्धयितुम् अभ्यर्थनादिना गौरवान्वितं कर्त्तुम्, आययुः। किं तथापि, एक एव धर्म्मो व्यवसायो येषां तेषाम्, नवदर्शनं नूतनावलोकनं कम्, कं जनम्, न खलु प्रीणयति न सन्तोषयति, अपि तु सर्व्वमेव प्रीणयतीत्यर्थः। अतएव दुद्धुं भीष्मकं संवर्द्धयितुमाययुरित्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥२२॥

**বাঙ্গালা**—তদনন্তর সমস্ত নীতিনিপুণ মুনিগণ ভীষ্মকরাজার সংবর্দ্ধনা করিবার জন্য তাঁহার নিকটে আগমন করিলেন। কারণ, এক ব্যবসায়ী-দিগের নূতন দর্শন কোন্ ব্যক্তিকে সন্তুষ্ট না করে? ॥২২॥

**अन्वयः**—दयालुना स्वप्रभया भुवः भयं लुनता युयुत्सुना (नृपेण) अभिवादयता (सता) दृढभक्तिसमार्द्रया दृशा योगिगणो ददृशे ॥२३॥

अभीति। दयालुना, स्वप्रभया निजतेजसा, भुवः पृथिव्या भयम्, लुनता छिन्दता नाशयतेत्यर्थः। युयुत्सुना योद्धुमिच्छुना योधप्रियाधिनेति यावत्, नृपेण अभिवादयता मुनीनामभिवादनं कुर्व्वता, सता, दृढभक्त्या समार्द्रया कोमलया, दृशा दृष्ट्या, योगिगणो ददृशे।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः।

परिशोधितपङ्कसङ्कुलः
श्रुतपातञ्जलजातधीजलैः ।
उपलैरिव मार्जितो मणि-
र्मुनिरेकः शुशुभे शुभप्रभः ॥२४॥

"दृढभक्तिर्भैरवान्याः" "मह्यरे दृढभक्तित्वम्" इत्यादिवत् अत्रापि भक्तिशब्दस्य भावप्रत्ययान्ततया पूरण्यादित्वाभावाच्च पुंवद्भाव-निषेधः ॥२३॥

বঙ্গানুবাদ—অনন্তর, আপন দেশে পৃথিবীর জয়শালী ও যোগশিক্ষার্থী ভীষ্মকরাজা অভিবাদন করিতে প্রবৃত্ত হইয়া, দৃঢভক্তি কোমলনয়নদ্বারা যোগিগণকে দর্শন করিলেন ॥২৩॥

अन्वयः—श्रुतपातञ्जलजातधीजलैः परिशोधितपङ्कसङ्कुलः उपलैः मार्जितः मणिः इव शुभप्रभः एकः मुनिः शुशुभे ॥२४॥

अथाष्टभिः श्लोकैः संक्षेपेण मुनीन् वर्णयति परीति । श्रुतमधीतं यत् पातञ्जलं पतञ्जलिकृतं योगदर्शनं तस्माज्जाता धियो ज्ञानान्येव जलानि तैः, परिशोधितं प्रक्षालितं पङ्काः पापान्येव पङ्काः कर्द्दमास्तेषां सङ्कुलं समूहो यस्य सः, उपलैः प्रस्तरैर्मार्जितो मणिरिव, शुभा उज्ज्वला प्रभा यस्य स तादृशश्च, एको मुनिः शुशुभे ।

अत्र पूर्वार्द्धे तादृशधीषु जलत्वारोपः पापेषु कर्द्दमत्वारोपे निमित्तं पङ्कशब्दस्य श्लिष्ट इति श्लिष्टपरम्परितरूपकमलङ्कारः, तृतीयपादे श्रौतोपमा च कान्तप्रासश्च श्लोकानां मिथो नैरपेक्ष्यात् संसृष्टिः ।

"अस्त्री पङ्कं पुमान् पाप्मा पापम्" इत्यादि "पङ्कोऽस्त्री शादकर्द्दमौ" इति चामरः ॥२४॥

परिशीलनया निरन्तरं
विहृतः केनचिदीदृशं यमः ।
शमनः शमशालिनो यथा
सुचिरं तस्य सुदूरगोऽभवत् ॥२५॥

---

বাঙ্গালা—পাতঞ্জলদর্শন অধ্যয়ন করায় উৎপন্ন জ্ঞানরূপ জলদ্বারা যিনি পাপরূপ কর্দ্দম প্রক্ষালন করিয়াছিলেন এবং প্রস্তরমার্জিত মণির ন্যায় যাহার উজ্জ্বল প্রভা প্রকাশ পাইতেছিল, সেইরূপ একজন মুনি সেখানে শোভা পাইতেছিলেন ॥২৪॥

अन्वयः—केनचित् निरन्तरं परिशीलनया यमः ईदृशं विहृतः, यथा शमनः शमशालिनः तस्य सुचिरं सुदूरगः अभवत् ॥२५॥

परीति । केनचिन्मुनिना, निरन्तरं परिशीलनया अभ्यासेन, यमः अष्टानां योगाङ्गानां मध्ये यमो नाम प्रथममङ्गं शमनश्च, ईदृशं विहृत आयत्तीकृतः, यथा, शमनो यमः, शमशालिनः अन्तरिन्द्रियनिग्रहयुक्तस्य, तस्य मुनेः, सुचिरं सुदूरगः सुदूरवर्त्ती अभवत् । योगाभ्यासेन दीर्घजीवना-पमृत्युभावादिति भावः ।

अत्र यमो विहृतोऽपि सुदूरगोऽभवदिति विरोधः, यमो योगाङ्गविशेष इति च तत्समाधानमिति विरोधाभासोऽलङ्कारश्छेकानुप्रासश्च तयोः संसृष्टिः ।

"अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" इति पातञ्जल-सूत्रम् ॥२५॥

বাঙ্গালা—কোন মুনি নিরন্তর অভ্যাসদ্বারা যমকে (যমনামক যোগাঙ্গকে, যমরাজকে) এমন ভাবে আয়ত্ত করিয়াছিলেন যে, যম

मलिनं वसनं कृशं वपुः
शिथिलं चर्म जटाश्च धारयन् ।
परिभूषितभूपतेरपि
बहुतेजोभिरदीपि कश्चन ॥२६॥
गिरयाऽप्यनिवार्यवीर्यया
पिशुनान् दण्डयितुं क्षमोऽपि सन् ।
अवलम्बनमस्खलं पथि
दृढदण्डं दधदेकपाणिना ॥२७॥

( यमनामक योगाङ्ग, यमराज ) दीर्घकालের জন্য অন্তরিন্দ্রিয়নিগ্রহশালী সেই মুনির অতিদূরবর্তী হইয়াছিলেন ॥২৫॥

अन्वयः—कश्चन मलिनं वसनं कृशं वपुः शिथिलं चर्म जटाश्च धारयन्, (सन् अपि) बहुतेजोभिः परिभूषितभूपतेः अपि अदीपि ॥२६॥

मलिनमिति। कश्चन मुनिः, मलिनं वसनम्, कृशं वपुः शरीरम्, शिथिलं चर्म, जटाश्च, धारयन् सन्नपि, बहुतेजोभिः तपोनिबन्धन-नयनादिमधुरदीप्तिभिः, परिभूषितो नानालङ्कारैरलङ्कृतः यो भूपती राजा ततोऽपि, अदीपि उज्ज्वलोऽभूत् ।

अत्र धारयन्नित्येकया क्रियया वसनादीनां कर्म्मतयाभिसम्बन्धा-त्तुल्ययोगितालङ्कारो वृत्त्यनुप्रासेन संसृज्यते ॥२६॥

বাঙ্গালা—কোন মুনি মলিন বস্ত্র, কৃশ শরীর, শিথিল চর্ম এবং জটা ধারণ করিয়াও নিজের প্রচুর তেজে, নানা অলঙ্কারে অলঙ্কৃত রাজা অপেক্ষাও দীপ্তি পাইতেছিলেন ॥২৬॥

अन्वयः—सर्वे अर्थमयः बहवः अपि यस्य जन्मात् सभयः (सन्) पश्चादतो (तादृशः) कश्चन अनिवार्यवीर्यया गिरया अपि पिशुनान् दण्डयितुं क्षमः सन् अपि दण्डपाणिना

वरुणोऽपि जलैकसंश्रयः
सभयो यस्य जलात् पलायते ।
अपरे च करे कमण्डलुं
तमुपादाय बभौ च कश्चन ॥२८॥ (युग्मकम्)

---

यष्टि अवलम्बनसम्बलं दृढदण्डं दधत्, अपरे च करे तं कमण्डलुं उपादाय बभौ ॥२७—२८॥

द्वाभ्यां युग्मकेन कश्चिद्वर्णयति गिरयेति । जलमेव एकः संश्रय आश्रयो यस्य स तथोक्तो वरुणोऽपि, यस्य मुनेः, जलात् अभिशापजल-निक्षेपात्; सभयः सन्, पलायते, तादृशः कश्चन मुनिः, अनिवार्य्यं वीर्य्यं शक्तिर्यस्यास्तया, गिरया अभिशापवाचापि, पिशुनान् दुर्ज्जनान् दण्डयितुम्, क्षमः समर्थः सन्नपि, एकपाणिना दक्षिणहस्तेन, पथि, अवलम्बनस्य सम्बलं सहायभूतम्, दृढदण्डम्, दधत् धारयन्, अपरे वामे च, करे हस्ते, तं प्रसिद्धम्, कमण्डलुं जलपात्रविशेषम्, उपादाय गृहीत्वा, बभौ रराज ।

अत्र पूर्वश्लोके छेकानुप्रासोऽलङ्कारः, द्वितीयश्लोके च जलैक-संश्रयोऽपि जलात् पलायत इति विरोधात् शापजलनिक्षेपात् पलायत इति च तत्समाधानाद्विरोधाभासोऽलङ्कारो इत्यनुप्रासाभासयोः संसृष्टिः ।

गिरयेति "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । टापञ्चापि हलन्तानां क्षुधा-वाचा-निशा-गिरा ॥" ॥२७—२८॥

বাঙ্গালা—একমাত্র জলনিবাসী বরুণও যাঁহার শাপজল নিক্ষেপের ভয়ে পলায়ন করেন, সেইরূপ কোন মুনি প্রবলশক্তিশালী বাক্যদ্বারা দুর্জনগণের দণ্ড দান করিতে সমর্থ হইয়াও দক্ষিণ হস্তে পথে অবলম্বনের সম্বল একখানা যষ্টি ধারণ করিয়া, অপর হস্তে একটী কমণ্ডলু লইয়া অবস্থান করিতেছিলেন ॥২৭—২৮॥

सरसीव सरोजमुज्ज्वलं
मिलितैर्नूतनभानुभानुभिः ।
नयनं गुरुगर्त्तगर्भगं
रुरुचे कस्य च योगजैर्महैः ॥२९॥
चिकुरास्तनुरोमराजयः
पृथुलश्मश्रुचयाश्च कस्यचित् ।
मनसा सह सत्त्वसङ्गिना
सुचिराद्बभुरतीव शुभ्रताम् ॥३०॥

---

अन्वयः—कस्य च गुरुगर्त्तगर्भगं नयनं योगजैः महैः मिलितैः नूतनभानुभानुभिः सरसि उज्ज्वलं सरोजं इव रुरुचे ॥२९॥

सरसीति। कस्य च कस्यापि मुनेः, गुरुगर्त्तगर्भगं गभीरगर्त्ताभ्यन्तरस्थं नयनम्, योगजैर्महैस्तेजोभिः, मिलितैः सरोजिनेव सह संयुक्तैः, नूतनभानोर्नवोदितसूर्य्यस्य भानुभिः किरणैः, सरसि जलाशये, उज्ज्वलं सरोजं पद्ममिव, रुरुचे दिदीपे।

अत्र श्रौतोपमालङ्कारः, वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः।
"महस्तूत्सवतेजसोः" इत्यमरः ॥२९॥

বাঙ্গালা—নবোদিত সূর্য্যকিরণের সহিত সংযুক্ত উজ্জ্বল পদ্ম যেমন সরোবরে শোভা পায়, সেইরূপ কোন মুনির গভীর গর্ত্তগত নয়ন যোগতেজে শোভা পাইতেছিল ।২৯।

अन्वयः—कस्यचित् चिकुराः तनुरोमराजयः पृथुलश्मश्रुचयाः च सत्त्वसङ्गिना मनसा सह सुचिरात् अतीव शुभ्रतां बभुः ॥३०॥

चिकुरा इति। कस्यचिन्मुनेः, चिकुराः केशाः, तनोः शरीरस्य

परमां तनुतां तनुरगात्
न युधो वस्तु च किञ्चिदास्त चेत् ।
अचलापरिचालनक्षमो
प्रथयाकेव तथापि कश्चन ॥२१॥

---

रोमराशयः, पृथुला दीर्घाः श्मश्रुचया मुखलोमसमूहाश्च, सत्त्वसङ्गिना सत्त्वगुणसंसर्गिणा मनसा सह, सुचिरादतिदीर्घकालादवधि, अतीव-शुभतां धवलतां निर्म्मलताञ्च, बभ्रुर्धारयामासुः ।

अत्र बभ्रुरित्येकया क्रियया चिकुरादीनां कर्त्तृतयाभिसम्बन्धा-त्तुल्ययोगितालङ्कारः, सहोक्तिश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनः पूर्ववदनुप्रासाभ्यां संसृज्यते ॥३०॥

বাঙ্গালা—কোন মুনির কেশকলাপ, দেহের লোমসমূহ এবং দীর্ঘ শ্মশ্রু সকল (দাড়িগুলি) সত্ত্বগুণসম্পন্ন মনের সহিত অতিদীর্ঘকাল হইতেই শুভ্রতা ধারণ করিতেছিল ॥৩০॥

अन्वयः—तनुः परमां तनुताम् अगात्, किञ्चित् युधः वस्तु च न आस्त, चेत् तथापि कश्चन अचलापरिचालनक्षमो (आसीत्) प्रथयाक इव ॥२१॥

परमामिति । तनुः शरीरम्, परमां तनुतां तपोऽनुष्ठानेनातीव-क्षामताम्, अगात् प्रापत् । किञ्चित् किमपि, युधो युद्धस्य, वस्तु शस्त्र-प्रभृतिपदार्थः, न आस्त न आसीत्, चेद्यदि, तथापि, कश्चन कश्चि-न्मुनिः, अचलायाः पृथिव्याः परिचालनक्षमो, कर्त्तुं प्रथयाकेव, तपःप्रभावादिति भावः ।

अत्र क्रियोत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृज्यते ।

आस्तेति "आस उपवेशने" इत्यस्य ह्यस्तन्यां प्रयोगः ॥२१॥

अथ ते मुनयोऽनयन्नृपं
गुरुसंसारगृहे तमोवृते ।
परिदर्शयितुं तपोभुवं
परतत्त्वं हितवाक्यदीपकैः ॥३२॥

गगनादथ हंसमण्डलात्
सततारोत्तमराजहंसवत् ।
परितः प्रभया प्रभासयन्
समुपागौनमरर्पि नारदः ॥३३॥

---

বাঙ্গালা—শরীর অত্যন্ত কৃশ ছিল এবং যদিও যুদ্ধের কোন বস্তু ছিল না ; তথাপি কোন মুনি যেন তপস্যার প্রভাবে পৃথিবীর পরিচালন ও ধ্বংস করিতে সমর্থ হইতেন ॥৩১॥

अन्वयः—अथ ते मुनयः हितवाक्यदीपकैः तमोवृते गुरुसंसारगृहे परतत्त्वं परिदर्शयितुं नृपं तपोभुवं अनयन् ॥३२॥

अथेति । अथ राज्ञस्तपोवनप्राप्तेरनन्तरम्, ते मुनयः, हित-वाक्यान्येव दीपकाः प्रदीपास्तैः, तमः अज्ञानमेव तमः अन्धकारस्तेन वृते आवृते गुरुमहान् संसारो जगदेव गृहं तस्मिन्, परं परमं तत्त्वं ब्रह्मैव सत्त्वं वस्तु तत्, परिदर्शयितुं साक्षात् कारयितुम्, नृपं भीष्मकम्, तपोभुवं तपस्यादेशं तपोवनमिति यावत् ; अनयन् ।

अत्र श्लिष्टं साङ्गं रूपकमलङ्कारस्तेनानुप्रासेन संसृज्यते ।
नयतेर्द्विकर्मकत्वात् कर्मद्वयम् ॥३२॥

বাঙ্গালা—তাহার পর সেই মুনিরা হিতোপদেশরূপ প্রদীপদ্বারা অজ্ঞান-অন্ধকারাবৃত বিশাল সংসাররূপ গৃহমধ্যে পরম বস্তু দেখাইবার জন্য ভীষ্মকরাজাকে তপোবনে লইয়া গেলেন ॥৩২॥

गतमुक्तिपदोऽपि जीवितो
धृतदेहोऽपि विदेहबोधवान् ।
भ्रमदण्डकुलालचक्रवत्
चिरसंस्कारवशेन यद्भ्रमिः ॥३४॥

---

अन्वयः—अथ अमरर्षिनारदः हंसमण्डलात् उत्तमराजहंसवत् प्रभया परितः मनुजर्षीन् प्रभासयन् गगनात् वततार ॥३३॥

गगनादिति। अथ भीष्मकस्य तपोवनप्रवेशानन्तरम्, अमरर्षिनारदः, हंसानां मण्डलात् समूहात्, उत्तमराजहंस इवेति उत्तमराजहंसवत्, महसा आत्मदीप्त्या, परितः सर्वतः, मनुजर्षीन् प्रभासयन् प्रद्योतयन्, गगनादाकाशात्, वततार अवततार।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासस्तूभयोः संसृष्टिः।

उत्तमराजहंसवदिति "मधुनि तोयं मधवद्दृष्यकारीत्" इत्यादिवत् सापेक्षेऽपि वतिप्रत्ययः। वततारेति "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यवशब्दस्याकारलोपः ॥३३॥

বাঙ্গালা—অনন্তর উত্তম রাজহংস যেমন আপন প্রভাদ্বারা হংসগণকে উদ্ভাসিত করিতে করিতে আকাশ হইতে ভূতলে অবতীর্ণ হয়, তেমন দেবর্ষি নারদ আপন প্রভাদ্বারা সকল দিকে মহর্ষিগণকে উদ্ভাসিত করিতে করিতে আকাশ হইতে ভূতলে অবতীর্ণ হইলেন ।৩৩।

अन्वयः—गतमुक्तिपदः अपि जीवितः धृतदेहः अपि विदेहबोधवान् भ्रमदण्ड-कुलालचक्रवत् चिरसंस्कारवशेन यद्भ्रमिः ॥३४॥

गतेति। गतं प्राप्तं मुक्तिपदं येन स तादृशोऽपि, जीवितः शरीरि-जीववान्; तथा, धृतदेहोऽपि, विदेहबोधवान् विदेहकैवल्यज्ञानवान्, भ्रम उत्तालनेन विभिन्नो दण्डो यस्य तत् कुलालचक्रं कुम्भकार-

तपने कृतनित्यसंयमात्
भुवनज्ञानसमन्वितः सदा।
स सुरर्षिस्तया नरर्षिभिः
अनुभूतः क्रियमाणसंयमैः ॥३५॥

---

चक्रश्चेति तद्दिव, चिरं यः संस्कारः भावनाख्यो वेगाख्यश्च गुणविशेषः तद्वशेन, यस्य नारदस्य, भ्रमिः जगत्यां विचरणं भ्रमणञ्चासीत्।

अत्र विरोधाभासश्रौतोपमयोः परस्परनिरपेक्षतया संसृष्टिः ॥३४॥

বাঙ্গালা—যিনি মুক্ত হইয়াও জীবদেহধারী, আর দেহ ধারণ করিয়াও বিদেহকৈবল্যজ্ঞানী এবং দণ্ড তুলিয়া লইলেও কুম্ভকারের চক্রের ন্যায় পূর্ব্বসংস্কারবশতঃ যাঁহার ভ্রমণ হইত ॥৩৪॥

अन्वयः—क्रियमाणसंयमैः नरर्षिभिः तपने कृतनित्यसंयमात् सदा भुवनज्ञान-समन्वितः सः सुरर्षिस्तया अनुभूतः ॥३५॥

तपन इति। क्रियमाणः संयमः धारणाध्यानसमाधिरूपं परम-योगाङ्गत्रयं यैस्तैः, नरर्षिभिः, तपने सूर्य्ये, कृतो य उक्तरूपो नित्यसंयमस्तस्मात्, सदा, भुवनज्ञानसमन्वितः तपनस्पृष्टसमस्तजगज्ज्ञान-सम्पन्नः, स आगन्तुको मुनिः, सुरर्षिस्तया देवर्षिनारदत्वेन, अनुभूतः अवगतः।

"त्रयमेकत्र संयमः" इति "सूर्य्ये संयमात् भुवनज्ञानम्" इति च योगसूत्रम् ॥३५॥

বাঙ্গালা—তত্রত্য মুনিরা ধ্যান করিয়া বুঝিতে পারিলেন যে, সূর্য্যে সংযম (ধারণা, ধ্যান ও সমাধি) করায় সর্ব্বদা জগতের সমস্ত-পদার্থ-জ্ঞানসম্পন্ন স্বয়ং দেবর্ষি নারদ—ইনি ॥৩৫॥

ददिरे पदवारि हारिणे
निजदृष्ट्या मुनये यदेनसाम् ।
मनुजर्षिमनोगतं मलं
परिधौतं किल तेन तत्क्षणात् ॥२६॥
पदरेणुरपि प्रयात्यहो
भुवने यस्य न चार्घयोग्यताम् ।
अतियोग्यमिमे व्यधिश्रयन्
मुनयेऽर्घं विनयेन तस्मकै ॥२७॥

---

अन्वयः—निजदृष्ट्या एनसां हारिणे मुनये यत् पदवारि ददिरे, तेन किल तत्क्षणात् मनुजर्षिमनोगतं मलं परिधौतं ॥२६॥

ददिर इति। निजदृष्ट्या आत्मनो दर्शनदानेनैव, एनसां पापानाम्, हारिणे नाशकाय, मुनये नारदाय, यत्, पदवारि पादप्रक्षालनजलम्, ददिरे तत्रत्या मुनयः समर्पयामासुः; तेन किल पदवारिणा, तत्क्षणात् मनुजर्षीणां मुनीनां मनोगतम्, मलं रागद्वेषादिकम्, परिधौतम् अपसारितम्। देवर्षेर्दर्शनदानस्यैव फलमेतदिति भावः।

अत्र कारणीभूतं वारि नारदे, तत्कार्यभूतो मलनाशस्तु तत्रत्य-मुनिमनःस्विति कार्यकारणयोर्भिन्नदेशत्वादसङ्गतिर्नामालङ्कारः, वृत्त्यनु-प्रासश्चेत्यनयोः संसृष्टिः ॥२६॥

বাঙ্গালা—যিনি আপন দর্শনদানমাত্রেই পাপ নাশ করিতেন, সেই দেবর্ষি নারদকে তত্রত্য মুনিরা যে পাদপ্রক্ষালনের জল দিয়াছিলেন, সেই জলেই তৎক্ষণাৎ তাঁহাদের মনের মল প্রক্ষালন করিয়াছিল।৩৬।

प्रणमन्ति जनाश्चिराय यान्
अथ तेऽपि प्रणमन्ति नारदम्।
अनमस्यतयेति वीक्ष्य तं
निरणैषुः पशुविच्छिरा अपि ॥३८॥

---

अन्वयः—अहो यस्य पदरेणुः अपि भुवने अर्घयोग्यतां न च प्रयाति। इमे विनयेन तस्मकै मुनये अतियोग्यं अर्घं व्यश्राणयन् ॥३७॥

पदेति। अहो आश्चर्यं। यस्य, पदरेणुश्चरणधूलिरपि, भुवने, अर्घस्य मूल्यस्य योग्यताम्, न च नैव प्रयाति प्राप्नोति, असाधारणोत्कर्षवत्त्वादिति भावः। इमे अरमयः, विनयेन, तस्मकै तस्मै, मुनये नारदाय, अतियोग्यम्, अर्घं पूजोपचारम्, व्यश्राणयन् अदुः।

अतोऽन्येषामुपकरणानां का कथा पदरेणुरपीत्यर्थे विरोधः इति चेद्योक्त-विधार्घकरणाच्च तत्समाधानमिति विरोधाभासोऽलङ्कारस्तु काव्यप्राणित संलक्ष्यते।

"मूल्ये पूजाविधावर्घः" इत्यमरः।

तस्मकै इति सर्वनामत्वादकच् प्रत्ययः ॥३७॥

বাঙ্গালা—কি আশ্চর্য্য! জগতে যাঁহার পদধূলিও অর্ঘের (মূল্যের) যোগ্যতা প্রাপ্ত না হয়, তপোবনের মুনিরা বিনয়সহকারে সেই নারদ-মুনিকে অতিযোগ্য অর্ঘ (পূজার উপচার) দান করিলেন ॥৩৭॥

अन्वयः—अथ जनाः चिराय यान् प्रणमन्ति ते अपि नारदं प्रणमन्ति ; इति वीक्ष्य पशुविच्छिराः अपि तं अनमस्यतया निरणैषुः ॥३८॥

प्रणमन्तीति। अथ अर्घदानानन्तरम्, जनाः, चिराय यान् प्रणमन्ति, ते तपोवनमुनयोऽपि नारदं प्रणमन्ति। इति वीक्ष्य दृष्ट्वा,

कथमत्र समागतो भवान्
इति तावत् प'रपृच्छ्य मामलम्।
गणविच्युतनीरशीकरः
प्रचलन् प्रस्रवणे हि युज्यते ॥३८॥

पशवो हरिणादयश्च विष्किराः पक्षिणः शुकादयश्चेति ते अपि, तं नारदम्, अनमस्यतया नमस्कारायोग्यतया इति विरोधः, न, विद्यते नमस्यो यस्मात्तस्य भावस्तया इति तत्समाधानम्। "निरणैषुनि'र्णीतवन्तः। सर्वैरिव यदमहमुनिगणाद्यपर्यात् तत्रत्यानां पशुपक्षिणामपि तादृशनिर्णयकरणयोग्यत्वमित्याशयः।

अत्रापि विरोधाभासोऽलङ्कारः। उद्दे श्यप्रतिनिर्द्दे श्यविषयत्वात् प्रथमन्तीत्यस्य द्विरुक्तावपि न कथितपदताऽऽपः।

"पतत्रि-पत्रि-पतग-वि-विष्किर-पतत्रयः" इत्यमरः।

विष्किरेति "विष्किरो विकिरे" इति निपातः ॥३८॥

বাঙ্গালা—অনন্তর, সমস্ত লোক চিরকাল যাঁহাদিগকে নমস্কার করিয়া থাকে, তপোবনের সেই মুনিরাই নারদকে প্রণাম করিতেছেন, ইহা দেখিয়া তত্রত্য পশুপক্ষীরাও দেবর্ষি নারদকে সর্ব্বপ্রধান নমস্য বলিয়া নিশ্চয় করিল ॥৩৮॥

अन्वयः—भवान् अत्र कथं समागतः इति तावत् मां परिपृच्छ्य अलं। हि गणविच्युतनीरशीकरः प्रचलन् (सन्) प्रस्रवणे युज्यते ॥३८॥

सविनयां नारदोक्तिमनुवदति कथमिति। भवान् नारदः, अत्र तपोवने कथं समागतः, इति तावत् मां परिपृच्छ्य अलम्, यूयं न परिपृच्छतेत्यर्थः। हि यस्मात्, गणात् स्वसदृशनीरशीकरसमूहाद्विच्युतस्तस्माद्भ्रष्टो नीरशीकरो जलविन्दुश्चेति स तथोक्तः, प्रचलन् निःसरन्

प्रथमं प्रथते स्म नारदः
मुनिरेषां कुतुकं निवर्त्तयन्।
स विदन् वदते हि यः पुनः
अनभिव्यक्तपराशयं विदन् ॥४०॥

सन्, प्रस्रवणे जलस्रोतसि, युज्यते मिलितो भवति। तथा च विश्लिष्ट एको जलबिन्दुर्यथा प्रचलन् जलस्रोतसि मिलितो भवति, तथाहमपि स्वदेशीय-स्वपित्रादिविश्लिष्टो भवद्भिः सह मिलितो भवितुमागत इति भावः।

अतएवात्र दृष्टान्तोऽलङ्कारः ॥३९॥

বাঙ্গালা—'আপনি এখানে আসিলেন কেন' এইরূপ আপনারা আমার নিকট প্রশ্ন করিবেন না। কারণ, অন্যান্য জলবিন্দু হইতে বিশ্লিষ্ট একটী জলবিন্দু চলিতে থাকিয়া জলস্রোতেই মিলিত হইয়া যায় ॥৩৯॥

अन्वयः—नारदः मुनिः एषां कुतुकं निवर्त्तयन् प्रथमं प्रथते स्म। यः पुनः अनभिव्यक्तपराशयं विदन् वदते स विदन् ॥४०॥

प्रथममिति। नारदो मुनिः, एषां तपोवनमुनीनाम्, कुतुकं निजागमनकौतुकम्, निवर्त्तयन् निवारयन्, प्रथमम्, प्रथते, ब्रवीति स्म। तथा च, यो जनः पुनः, अनभिव्यक्तो न प्रकाशितः यः परस्य आशयोऽभिप्रायस्तम्, विदन् आत्मनैव बुध्यमानः सन्, वदते तं पराशयं ब्रवीति, स जन एव विदन् विद्वान्। अत्रापि नारदो मुनीनामुक्तविधमाशयं जानन्नेव पूर्वोक्तं श्लोकमाह स्मेति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो वृत्त्यनुप्रासश्छेकानुप्रासश्चैतेषां संसृष्टिः।

प्रतिपादयतां भुवः शुभं
शुभपृच्छा भवतामनर्थिका ।
सविधे हि तमस्तमोनुदः
प्रसरीतुं नहि जातु दृश्यते ॥४१॥

---

प्रथत इति "प्रथ प्रख्याने" इत्यस्य रूपम्। वदत इति चौरादिको वदधातुरात्मनेपदी ॥४०॥

বাঙ্গালা।—নারদমুনি তপোবনবাসী মুনিগণের কৌতূহল নিবৃত্তি করিবার জন্য প্রথমে ঐ কথা বলিয়াছিলেন। কারণ, যিনি পরের অপ্রকাশিত অভিপ্রায় বুঝিয়া কথা বলিতে পারেন, তিনিই বিদ্বান্ ।৪০।

अन्वय.—भुवः शुभं प्रतिपादयतां भवतां शुभपृच्छा अनर्थिका। हि तमः जातु तमोनुदः सविधे प्रसरीतुं नहि दृश्यते ॥४१॥

प्रतीति। भुवः पृथिव्या एव, शुभं मङ्गलम्, प्रतिपादयतां तपसा सर्वोपकारचिकीर्षया च विदधतां भवताम्, शुभपृच्छा मङ्गलजिज्ञासा अनर्थिका निष्प्रयोजना, सर्वशुभसम्पादकानामात्मशुभसम्पादनस्य सुतरां सिद्धत्वादिति भावः। हि तथाहि, तमोऽन्धकारः, जातु कदाचिदपि, तमोनुदः अन्धकारनाशकस्य सूर्यस्य, सविधे समीपे, प्रसरीतुमाविर्भवितुं नहि दृश्यते। शुभविधानि अशुभनाशनस्यावश्यम्भावेन शुभविधायिनामशुभाविर्भावस्य सर्वथैवासम्भवादित्याशयः।

अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारः, शुभपृच्छाया आनर्थक्यं प्रति प्रथमपादगतपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, तमस्तमोनुद इति लाटानुप्रासश्चैतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

"चन्द्राग्न्यर्कास्तमोनुदः" इत्यमरः।

तमो नुदतीति क्विप् ॥४१॥

परिशीलयतां तपःक्रियां
दुरितं दूरमुपैति वः स्वयम्।
सुघनापि घनावली चयं
दिवि वाते परिवाति गच्छति ॥४२॥
मुनितां श्रयितुं तपोवने
समयोऽयं नृप! सत्यमस्ति ते।
परिपूर्णं वयः परं वयः
ननु योग्यस्य सुतस्तवाधुना ॥४३॥

বাঙ্গালা—মহর্ষিগণ! আপনারা জগতের মঙ্গল সম্পাদন করিয়া থাকেন; সুতরাং আমাদের মঙ্গল জিজ্ঞাসা করা নিষ্প্রয়োজন। কারণ, অন্ধকারনাশক সূর্য্যের নিকটে অন্ধকারের আবির্ভাব দেখা যায় না।৪১।

অন্বয়:—দুরিতং তপঃক্রিয়াং পরিশীলয়তাং বঃ স্বয়ং (এব) দূরং উপৈতি। দিবি সুঘনা অপি ঘনাবলী বাতে পরিবাতি (সতি, স্বয়মেব) চয়ং গচ্ছতি ॥৪২॥

पापनाशपृच्छाप्यनर्थिकेत्याह परीति। दुरितं पापं कर्तृ, तपः-क्रियां तपस्यां परिशीलयतां पौनःपुन्येन कुर्वताम्, वो युष्माकम्, स्वयमेव दूरमुपैति गच्छति। दिवि आकाशे, सुघनापि अतिनिविड़ापि घनावली मेघमाला, वाते वायौ, परिवाति प्राबल्येन वहति सति स्वयमेव, चयं नाशम्, गच्छति प्राप्नोति।

अत्र एकस्यैव नाशगमनस्य उपैति गच्छतीति धातुभेदादिना पृथक्-निर्देशात् प्रतिवस्तूपमालङ्कारस्फूर्त्यानुप्रासेन संसृज्यते ॥४२॥

বাঙ্গালা—আপনারা নিরন্তর তপস্যা করিতেছেন; অতএব পাপও নিজেই দূরে যাইয়া থাকে। কারণ, আকাশে প্রবল বায়ু বহিতে হইতে লাগিলে, অতিনিবিড় মেঘমালাও বিনাশ প্রাপ্ত হয়।৪২।

नृप ! किन्तु सुदन्तुरा क्रिया
पुनरेका परिशिष्यते तव ।
अयि ! भूतपतिं विनाऽवनौ
न भवेत् कस्य जनस्य विस्मृतिः ॥४४॥

अन्वयः—हे नृप ! तपोवने मुनितां श्रयितुं अयं ते समयः इति सत्यं अस्ति । अधुना तव विषयः अरिपुः वयः परं सुतश्च योग्यः ननु ॥४३॥

इत्थं मुनीनाभाष्येदानीं भीष्मकमाभाषते मुनितामिति । हे नृप ! भीष्मक ! तपोवने, मुनितां मुनित्वम्, श्रयितुमवलम्बितुम्, अयं ते तव समय आगतः ; इति सत्यमस्ति वर्त्तते । येन हि, अधुना, तव विषयो देशो राज्यमिति यावत् ; अरिपुः शत्रुशून्यः, वयः, परं चरमम्, सुतः पुत्रश्च योग्यः, नन्वित्यवधारणे ।

अत्र पूर्वार्द्धगतमर्थं प्रति परार्द्धगतवाक्यार्थो हेतव इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, उक्तार्थे हेतुत्रयोपन्यासात् समुच्चयश्च त्वनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनस्तृतीयपादगतत्वप्रस्तुतभावेन संसृज्यते ॥४३॥

বাঙ্গালা—রাজা ! তপোবনে আসিয়া আপনার মুনি হওয়ার এ-ই সময়, ইহা সত্য বটে । কারণ, বর্ত্তমান সময়ে আপনার রাজ্য নিষ্কণ্টক, বয়স প্রাচীন এবং পুত্রও যোগ্য হইয়াছে ॥৪৩॥

अन्वयः—किन्तु हे नृप ! एका पुनः तव सुदन्तुरा क्रिया परिशिष्यते । अयि ! भूतपतिं विना अवनौ कस्य जनस्य विस्मृतिः न भवेत् ॥४४॥

नृपेति । किन्तु हे नृप ! एका पुनस्तव, सुदन्तुरा अतिविषमा ; क्रिया कार्य्यम्, परिशिष्यते अवशिष्टा वर्त्तते । तत् किमेतद्विस्मृतिरात्मेधिकारः कर्त्तव्य इत्याह अयीति । अयि राजन् ! भूतपतिं महादेवं विना, अवनौ पृथिव्याम्, कस्य जनस्य विस्मृतिर्न भवेत्, अपि

पतिमात्कृता तवालये
तनया शैशवसीम्नि वर्त्तते ।
तृषिताय जने यथा जलं
युवतिर्यून इह प्रदीयते ॥४५॥

तु सर्वस्यैव भवेदित्यर्थः । ततश्च तद्विषयारम्भात्मधिकारी न कर्त्तव्य इति भावः ।

अत्र छेकानुप्रासोऽलङ्कारः ।

"छन्दो वाच्यवहितात् वियमोच्चराङ्गलयोः" इति वियः ॥४४॥

বাঙ্গালা—কিন্তু রাজা ! একটী অতিগুরুতর কার্য্য আপনার অবশিষ্ট রহিয়াছে । হে নরনাথ ! জগতে একমাত্র মহাপুরুষ নারীর একটা কোন্ ব্যক্তির বিচ্ছেদ না হয় ? ॥৪৪॥

अन्वयः—तव आलये पतिमात् भवता तनया शैशवसीम्नि वर्त्तते । इह यथा जने तृषिताय जलं (तथा) यूने युवतिः प्रदीयते ॥४५॥

अथ का नाम कृत्यन्तरा क्रिया अवशिष्यते इत्याह—पतिमादिति । हे राजन् ! तव आलये भवने, पतिमात् भवता वराय असम्प्रदत्ता, तनया कन्या, शैशवसीम्नि बाल्यकालपरमसीमायाम्, यौवनारम्भकाल इत्यर्थः, वर्त्तते । इह जगति, यथा जनैः तृषिताय तृष्णार्त्ताय, जलम्, तथा यूने तरुणाय, युवतिः प्रदीयते । कन्यासम्प्रदानक्रियैव तवावशिष्यत इति भावः ।

तनुजां रुजामृणक्रियां
परिवर्द्धिष्णुमतीवदारुणाम् ।
सुधियः समये प्रदाय तत्
चिरशान्तिं किल यान्ति सुस्थिराः ॥४६॥
दशमेऽपि ग[illegible]ा गर्हे
जठरे दारुणदुःखदा क्षुधा ।

अन्वयः—तत् सुधियः परिवर्द्धिष्णु अतीवदारुणां तनुजां रुजां ऋणक्रियां च समये प्रदाय सुस्थिराः (सन्तः) चिरशान्तिं यान्ति किल ॥४६॥

तनुजामिति । तत्तस्मात्, सुधियो बुद्धिमन्तो जनाः, परिवर्द्धिष्णुं क्रमेण वृद्धिशीलाम्, तत एव च अतीवदारुणां नितान्तभीषणाम्, तनुजां कन्याम्, रुजां रोगम्, ऋणक्रियाञ्च, समये निर्द्धारितकाले, प्रदाय सम्यं अपरत्रपत्रा औषधादिना विनाश्य स्वयं, परिशोध्य च, सुस्थिराः निरुपद्रवाः सन्तः, चिरशान्तिम्, यान्ति प्राप्नुवन्ति किल ।

अत्र प्रदाय इत्येकया क्रियया प्रस्तुतायास्तनुजाया अप्रस्तुतयो रुजाऋणक्रिययोश्चाभिसम्बन्धाद्दीपकमलङ्कारः, प्रदायेति तनुजाऋण-क्रियापक्षे दाधातो रुजापक्षे च "दो अवखण्डने" इति दोधातोः क्त्वाप्रत्यये रूपमिति प्रकृतिश्लेषः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥४६॥

বাঙ্গালা—অতএব, ক্রমবর্দ্ধিষ্ণু ও অত্যন্তভীষণ কন্যাকে যথা সময়ে দান করিয়া, রোগের উপশম জন্মাইয়া এবং ঋণ পরিশোধ করিয়া, বুদ্ধিমান্ লোকেরা নিরুপদ্রব হইয়া চিরকালের জন্য শান্তি লাভ করেন ॥৪৬॥

अनयोः प्रथमैव दुःसहा
घटतेऽन्नं परितो हि नो वरः ॥४७॥

तनयां तरुणीं विलोकयन्
अददद्यः खलु नोन्मनायते ।
घमते समुपेक्ष्य स स्थिरः
शयितुं स्वे शिखिनः शिखां गृहे ॥४८॥

अन्वयः—गृहे दशवर्षगता सुता, जठरे (च) दारुणदुःखदा क्षुधा, अनयोः प्रथमा एव दुःसहा । परितः हि अन्नं घटते, वरः नो ॥४७॥

अप्रस्तुते बजाकरणक्रिये परिहाय प्रस्तुतायाः कन्याया अतिदारुणत्वं सूचयन्नाह दशेति । गृहे, दशवर्षाणि गता अतिक्रान्ता ; सुता कन्या, जठरे उदरे च, दारुणदुःखदा क्षुधा वर्त्तते इति शेषः । अनयोः कन्या-क्षुधयोर्मध्ये, प्रथमा क्रमवर्द्धमाना कन्यैव दुःसहा । यतो हि, परितः सर्वतो हि सर्वत्रैव, अन्नं क्षुधानिवर्त्तकं खाद्यम्, घटते प्राप्तियोग्यं भवति, किन्तु वरः पात्रम्, नो न घटते, सर्वथा योग्यवरस्यातिदुर्लभत्वा-दिति भावः ।

अत्र दुःसहत्वं प्रति चतुर्थपादगतवाक्यार्थो हेतुरिति वाक्यार्थ-हेतुकं काव्यलिङ्गमलङ्कारः ॥४७॥

বাঙ্গালা—ঘরে দশবর্ষের অধিক বয়স্কা কন্যা, আর উদরে দারুণ দুঃখজনক ক্ষুধা, এই দু'য়ের প্রথমাই (উক্তবিধ কন্যাই) অত্যন্ত দুঃসহ। কারণ, সর্ব্বত্রই অন্ন পাওয়া যায়, কিন্তু যোগ্য পাত্র সর্ব্বত্র পাওয়া যায় না ।৪৭

अन्वयः—यः स्वन् तनयां तरुणीं विलोकयन् अददत्, न उन्मनायते, स स्वे गृहे शिखिनः शिखां समुपेक्ष्य (अपि) स्थिरः (सन्) शयितुं घमते ॥४८॥

इतरस्य समस्तवस्तुनः
घटते पात्रमहो समन्ततः ।
तनयाप्रतिपादने परं
भुवनेष्वेकमपीह दुर्लभम् ॥५१॥
भव भूमिपते ! स्थिरान्तरः
तदिमां योग्यजनेन योजयन् ।
अतिशान्तिकरी हि धर्म्मिणां
परनिक्षेपसमर्पणक्रिया ॥५२॥

---

**अन्वय.**—अहो ! इतरस्य समस्तवस्तुनः पात्रं समन्ततः घटते ।, परं इह भुवनेषु तनयाप्रतिपादने एकं अपि पात्रं दुर्लभं ॥५१॥

इतरस्येति । अहो इति विस्मये । इतरस्य अपरस्य, समस्तवस्तुनः, पात्रं प्रतिपादनयोग्यीभूता व्यक्तिः, समन्ततः सर्वास्वेव दिक्षु, घटते सुलभं भवति ; परं किन्तु इह भुवनेषु, तनयाप्रतिपादने कन्यादाने, एकमपि पात्रं दुर्लभम् । अभीष्टसर्वगुणसम्पन्नस्य पात्रस्य नितान्तविरलत्वा-दित्याशयः ॥५१॥

**বাঙ্গালা**—হায় ! অন্য সমস্ত বস্তু সম্প্রদানের পাত্র অনায়াসে সকল দিকেই পাওয়া যায়, কিন্তু এই ত্রিভুবনে কন্যা সম্প্রদানের একটী পাত্র পাওয়াও অতিদুষ্কর ॥৫১॥

**अन्वय.**—(हे) भूमिपते ! तत् इमां योग्यजनेन योजयन् (सन्) स्थिरान्तरः भव । हि परनिक्षेपसमर्पणक्रिया धर्म्मिणां अतिशान्तिकरी ॥५२॥

भवेति । हे भूमिपते ! तत्तस्मात्, इमां तव तनयाम्, योग्यजनेन उपयुक्तपात्रेण सह, योजयन् सन्, स्थिरान्तरः सुस्थचित्तो भव । हि

इति देवमुनौ मनस्विनं
मनुजेन्द्रं विरते निगद्य तम्।
नयविद्विनयेन नारदं
समनूचानमिदं नृपोऽवदत् ॥५३॥

तथाहि, परस्य यो निक्षेपः स्वस्मिन् न्यासीभूतं द्रव्यं तस्य समर्पणक्रिया तस्मै परस्मै स्वामिने एव प्रत्यर्पणव्यापारः, धर्म्मिणां धार्म्मिकपुरुषाणाम्, अतिशान्तिकरी भवति। कन्या खलु निक्षेपद्रव्यतुल्येति भावः।

अत्र साधर्म्म्येण दृष्टान्तोऽलङ्कारः ॥५२॥

বাঙ্গালা—অতএব রাজা! আপনি আপনার এই কন্যাটিকে উপযুক্ত পাত্রের সহিত সম্মিলিত করাইয়া দিয়া সুস্থচিত্ত হউন। কারণ, পরের গচ্ছিত দ্রব্য প্রত্যর্পণ করা ধার্ম্মিক লোকদিগের পক্ষে অত্যন্ত শান্তিজনক ॥৫২॥

अन्वयः—देवमुनौ मनस्विनं तं मनुजेन्द्रं इति निगद्य विरते (सति) नयवित् नृपः विनयेन तं अनूचानं नारदं इदं अवदत् ॥५३॥

इतीति। देवमुनौ नारदे, मनस्विनं प्रशस्तमनसं तं मनुजेन्द्रं राजानं भीष्मकम्, इति पूर्वोक्तप्रकारम्, निगद्य उक्त्वा, विरते सति; नयवित् नीतिज्ञः, नृपो भीष्मकः, विनयेन नम्रभावेन, तम् अनूचानम् अधीतसाङ्गवेदं नारदम्, इदं वक्ष्यमाणम्, अवदत्।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

अनूचानमिति अनुपूर्वाद्वचेः कानप्रत्ययः, तस्य ■ परोक्षवद्भावाद्-द्विर्वचने रूपम्।

"अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इत्यमरः ॥५३॥

इतरस्य समस्तवस्तुनः
घटते पात्रमहो समन्ततः ।
तनयाप्रतिपादने परं
भुवनेष्वेकमपीह दुर्लभम् ॥५१॥
भव भूमिपते ! स्थिरान्तरः
तदिमां योग्यजनेन योजयन् ।
अतिशान्तिकरी हि धर्म्मिणां
परनिक्षेपसमर्पणक्रिया ॥५२॥

---

**अन्वयः**—अहो ! इतरस्य समस्तवस्तुनः पात्रं समन्ततः घटते । परं इह भुवनेषु तनयाप्रतिपादने एकं अपि पात्रं दुर्लभं ॥५१॥

इतरस्येति । अहो इति विषादे । इतरस्य अपरस्य, समस्तवस्तुनः, पात्रं प्रतिपादनविषयीभूता व्यक्तिः, समन्ततः सर्वास्वेव दिक्षु, घटते सुलभं भवति ; परं किन्तु इह भुवनेषु, तनयाप्रतिपादने कन्यादाने, एकमपि पात्रं दुर्लभम् । अभीष्टसर्वगुणसम्पन्नस्य पात्रस्य नितान्तविरलत्वादित्याशयः ॥५१॥

**বাঙ্গালা**—হায় ! অন্য সমস্ত বস্তু সম্প্রদানের পাত্র অনায়াসে সকল দিকেই পাওয়া যায়, কিন্তু এই ত্রিভুবনে কন্যা সম্প্রদানের একটী পাত্র পাওয়াও অতিদুষ্কর ॥৫১॥

**अन्वयः**—(हे) भूमिपते ! तत् इमां योग्यजनेन योजयन् (सन्) स्थिरान्तरः भव । हि परनिक्षेपसमर्पणक्रिया धर्म्मिणां अतिशान्तिकरी ॥५२॥

भवेति । हे भूमिपते ! तत्तस्मात्, इमां तव तनयाम्, योग्यजनेन उपयुक्तपात्रेण सह, योजयन् सन्, स्थिरान्तरः सुस्थचित्तो भव । हि

इति देवमुनौ मनस्विनं
मनुजेन्द्रं विरते निगद्य तम्।
नयविद्विनयेन नारदं
तमनूचानमिदं नृपोऽवदत् ॥५३॥

तथाहि, परस्य यो निक्षेपः यस्मिन् न्यासीभूतं द्रव्यं तस्य समर्पणक्रिया तस्मै परस्मै स्वामिन एव प्रत्यर्पणव्यापारः, धर्म्मिणां धार्म्मिकपुरुषाणाम्, अतिशान्तिकरी भवति। कन्या खलु निक्षेपद्रव्यतुल्येति भावः।

अत्र साधर्म्म्येण दृष्टान्तोऽलङ्कारः ॥५२॥

বাঙ্গালা—অতএব রাজা! আপনি আপনার এই কন্যাটিকে উপযুক্ত পাত্রের সহিত সম্মিলিত করাইয়া দিয়া সুস্থচিত্ত হউন। কারণ, পরের গচ্ছিত দ্রব্য প্রত্যর্পণ করা ধার্ম্মিক লোকদিগের পক্ষে অত্যন্ত শান্তিজনক ॥৫২॥

अन्वयः—देवमुनौ मनस्विनं तं मनुजेन्द्रं इति निगद्य विरते (सति) नयवित् नृपः विनयेन तं अनूचानं नारदं इदं अवदत् ॥५३॥

इतीति। देवमुनौ नारदे, मनस्विनं प्रशस्तमनसं तं मनुजेन्द्रं राजानं भीष्मकम्, इति पूर्व्वोक्तप्रकारम्, निगद्य उक्त्वा, विरते सति; नयवित् नीतिज्ञः, नृपो भीष्मकः, विनयेन नम्रभावेन, ताम् अनूचानम् अधीतसाङ्गवेदं नारदम्, इदं वक्ष्यमाणम्, अवदत्।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः।

अनूचानमिति अनुपूर्व्वाद्वचेः कानप्रत्ययः, तस्य च परोक्षवद्भावाद्-द्विर्वचने रूपम्।

विषयाद्विरतेः परं जनः
प्रचिकीर्षन् परलोकगां क्रियाम् ।
अतरङ्गतरङ्गिणीजले
विफलाशो भविताप्लवार्थिवत् ॥५६॥

अन्वयः—भवतां वचसां अनुत्तरात् अवहेला, कथनात् च धृष्टता (भवति) ; तत् अमुष्य कथनं क्षम्यताम् । हि दक्षिणः उत्तरतां न वहति ॥५५॥

भवतामिति । भवतां महर्षीणाम्, वचसां वाक्यानाम्, अनुत्तरात् उत्तरादानात्, अवहेला अवज्ञा, कथनादुत्तरवचनाच्च, धृष्टता प्रगल्भता भवति ; तत्तथापि, अमुष्य जनस्य ममेत्यर्थः, कथनमुत्तरकरणम्, तद्विषयकधृष्टतापराध इति तात्पर्य्यम्, क्षम्यतां भवता क्षम्यताम् । हि तथाहि, दक्षिणः उदारचेता जनः, उत्तरतां वामतां प्रतिकूलतामिति यावत् ; न वहति न धारयति कर्त्तुं नेच्छतीत्यर्थः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्चानु-प्रासेन संसृज्यते ॥५५॥

বাঙ্গালা—আপনাদের বাক্যের উত্তর না দিলে অবজ্ঞা করা হয়, আবার উত্তর দিলে প্রগল্‌ভতা প্রকাশ পায়, তথাপি এই ব্যক্তির উত্তর করার অপরাধ আপনি ক্ষমা করুন। কারণ, দক্ষিণ (উদারচেতা লোক) উত্তরতা (প্রতিকূলতা) করিতে ইচ্ছা করেন না ॥৫৫॥

अन्वयः—जनः विषयात् विरतेः परं परलोकगां क्रियां प्रचिकीर्षन् (सन्) अतरङ्गतरङ्गिणीजले अप्लवार्थिवत् विफलाशः भविता ॥५६॥

विषयादिति । जनः, विषयात् सांसारिककार्य्यात्, विरतेः उपरतेः विरामात्, परमनन्तरम्, परलोकगां परलोकगामिनीं पारलौकिक-फलजनिकामित्यर्थः, क्रियां धर्म्मानुष्ठानादिकार्य्यम्, प्रचिकीर्षन् प्रकर्षेण

प्रगणय्य यदीह शेषयेत्
जलवालूर्वियतश्च तारकाः ।
निपुणोऽपि तथापि मानवः
नहि संसारकृतेः कलामपि ॥५७॥

कर्त्तुमिच्छन् सन्, न विद्यन्ते तरङ्गा यस्मिन् तदतरङ्गं, तरङ्गिण्या नद्याः यज्जलं तत्, वायुसञ्चालनसमय इत्यभिप्रायः; आप्लवार्थी यत् स्नानार्थी जन इव, विफला आशा धर्म्मानुष्ठानाशंसा स्नानाशंसा च यस्य स तादृशः, भविता भविष्यति। वायौ प्रवाते नद्यास्तरङ्गाभावस्येव, सांसारिककार्य्यसमाप्तेः सर्व्वथैवासम्भवादिति भावः ।

अत्र श्रौतोपमालङ्कारस्यच्छेकानुप्रासस्य त्वनुभयोः संसृष्टिः ॥५६॥

বাঙ্গালা—প্রবল বায়ু বহিবার সময়ে যে লোক তরঙ্গশূন্য নদীর জলে স্নান করিবার ইচ্ছা করে, তাহার যেমন সে আশা নিষ্ফল হইয়া যায়, সেইরূপ যে লোক, সাংসারিক কার্য্য শেষ হইবার পরে ধর্ম্মানুষ্ঠান করিবার ইচ্ছা করে, তাহার সে আশাও নিষ্ফল হইয়া যায় ॥৫৬॥

अन्वयः—इह जलवालूः वियतः तारकाः च प्रगणय्य यदि शेषयेत् अपि, तथापि निपुणः मानवः अपि संसारकृतेः कलां अपि नहि शेषयेत् ॥५७॥

संसारकार्य्यस्यापरिशेषत्वमाह प्रगणय्येति । इह जगति, जलवालूः जलस्था वालुकाः, वियतो गगनस्य, तारका नक्षत्राणि च, प्रगणय्य प्रकर्षेण गणयित्वा, यदि शेषयेत् कश्चित् समापयितुं शक्नुयादपि; तथापि, निपुणो गणनादक्षः, मानवोऽपि, संसारकृतेः सांसारिककार्य्यसमूहस्य, कलां षोडशभागैकभागमपि, नहि शेषयेत् गणनया समापयितुं नैव शक्नुयात्; अशेषत्वादित्याशयः ।

अतिशिष्टजनः स्वचेष्टया
विषयान्तं नहि गन्तुमीश्वरः ।
चिरवाहनयापि नाम्बुधिं
तरिमारुह्य तरीतुमर्हति ॥५८॥

अत्र "उभौ यदि व्योम्नि पृथक् प्रवाहौ" इत्यादिवत् जलवालु-
वियत्तारकागणनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः ॥५७॥

বাঙ্গালা—কোন লোক জলের বালি এবং আকাশের নক্ষত্র গণনা করিয়া যদি শেষ করিতে পারেও; তথাপি গণনানিপুণ মানুষও সাংসারিক কার্য্যের ষোলভাগের একভাগও গণনা করিয়া শেষ করিতে পারে না ॥৫৭॥

अन्वयः—अतिशिष्टजनः (अपि) स्वचेष्टया विषयान्तं गन्तुं ईश्वरः नहि (भवति) । तरिं आरुह्य चिरं वाहनया अपि अम्बुधिं तरीतुं न अर्हति ॥५८॥

उक्तमेवार्थं भङ्ग्यन्तरेण पुनराह अतीति । अतिशिष्टजनः सर्वथा शास्त्रानुसारी लोकोऽपि, शास्त्रानुसारेण सर्वकार्य्यकारिणः पूर्णस्यास्य दीर्घायुर्लाभादिति भावः । स्वचेष्टया, ईश्वरेच्छया तु शक्नोत्येवे-त्याशयः । विषयान्तं सांसारिककार्य्यशेषम्, गन्तुं प्राप्तुम्, ईश्वरः समर्थः, नहि भवति । तथाहि, तरिं साधारणनौकाम्, आरुह्य, चिरं वाहनया चालनयापि, अम्बुधिं समुद्रम्, तरीतुमतिक्रमितुं नार्हति न शक्नोति ।

अत्र पूर्वार्द्धपरार्द्धवाक्यार्थयोः साम्यप्रतीतेः ईश्वर अर्हतीति पृथङ्-निर्द्देशाच्च प्रतिवस्तूपमालङ्कारश्छेकानुप्रासेन संसृज्यते ॥५८॥

गृहकार्यसमापनेच्छया
तदकार्षं न तु शेषमाप्तवान् ।
ज्वलितं व्यजनेन पावकं
ननु निर्वापयितुं हि कः क्षमः ॥५९॥
पितृराज्यमसह्यविक्रमः
सकलाङ्गं परितो विलोकयन् ।
स्वकराकलितं यथा फलम्
अशिपं साम्युदयात्तुपल्लवम् ॥६०॥

अन्वयः—(अहं) गृहकार्यसमापनेच्छया तत् अकार्षं, न तु शेषं आप्तवान् । हि ननु कः व्यजनेन ज्वलितं पावकं निर्वापयितुं क्षम (स्यात्) ॥५९॥

उक्तार्थे दृष्टान्तनिदर्शनमेवाह गृहेति । अहं गृहकार्यसमापनेच्छया, तद्गृहस्थकार्यम् अकार्षम्, किन्तु, तस्य शेषं न आप्तवान् कर्तुं नाशक्नम् । किं तथाहि, ननु हे देव्यः ! कः पुरुषः, व्यजनेन तालवृन्तवायुना, ज्वलितं पावकमग्निम्, निर्वापयितुं शमयितुं शक्तः स्यात्; नापि तु कोऽपि न, तेन तु तद्वदेवेत्यर्थः । सांसारिकं कार्यमप्येवमेवेति भावः ।

तनयाय नयैकचक्षुषे
स्थिरराज्यं वितरन् समुज्ज्वलम् ।
कृतकृत्यतया व्यरंसिषं
परिभुक्ताम्य कुतो बुभुक्षुता ॥६१॥

विजितेति । जेतुमशक्यः अजय्यो विक्रमो यस्य सः अजय्यविक्रमः अहम्, परितः सर्वतः, सकलानि अङ्गानि सन्धिविग्रहादीनि यस्य तत्, सकलाङ्गं पितृराज्यम्, स्वकरेण निजपाणिना आकलितं धृतं फलं यथा, तथा विलोकयन्, अभ्युदयेन उन्नत्या अनुपप्लवेन उपद्रवराहित्येन च सहेति साभ्युदयानुपप्लवं यथा स्यात्तथा अखिलं शासितवान् ।

अत्र श्रौतोपमालङ्कारः ।

"सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । राज्याङ्गानि…" इत्यमरः ।

अजय्येति जयतेः "शकार्हे" इति यत्प्रत्यये गुणे च "जिव्याः शक्ये" इति स्वरवद्भावेन अयादेशः ॥६०॥

বাঙ্গালা—অজেয়বিক্রমশালী আমি, স্বহস্তধৃত ফলের ন্যায় সর্বাঙ্গ-সম্পন্ন পৈতৃকরাজ্যের সকল দিক্ পর্যবেক্ষণ করিতে থাকিয়া উন্নতি ও উপপ্লবাভাবের সহিত তাহা শাসন করিয়া আসিয়াছি ।৬০।

अन्वयः—(अहं) नयैकचक्षुषे तनयाय समुज्ज्वलं स्थिरराज्यं वितरन् (सन्) कृतकृत्यतया व्यरंसिषं । परिभुक्ताम्य कुतः बुभुक्षुता (स्यात्) ॥६१॥

तनयायेति । अहम्, नयो नीतिशास्त्रमेव एकं मुख्यं चक्षुर्यस्य तस्मै तनयाय [illegible], समुज्ज्वलं सर्वविघ्नेनाभ्युदयेनातीवशोभितम्, स्थिरराज्यम्, वितरन् समर्पयन् सन्, कृतकृत्यतया हेतुना, व्यरंसिषं

सुतपुत्रविवाहदर्शनं
तनयादानमशेषमीदृशम् ।
अननुष्ठितकार्य्यमस्ति मे
नहि शक्या करणीयशेषिता ॥६२॥

विषयाद्विरतवानस्मि । तथाहि, परिभुक्तस्य यथेष्टं भोज्यं भुक्तवतो जनस्य, कुतः बुभुक्षुता भोक्तुमिच्छुता स्यात्, अपि तु कुतोऽपि नेत्यर्थः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ।

परिभुक्तस्येति भुजेर्भावे क्तप्रत्ययस्तादस्त्यर्थे अर्श आदित्वादच्, "वनाय पीतप्रतिबद्धवत्साम्" इत्यादिवत् ॥६१॥

বাঙ্গালা—নীতিজ্ঞানরূপ বিশিষ্ট নয়নসম্পন্ন পুত্র রুক্মীর হস্তে সমুজ্জ্বল ও স্থির রাজ্য সমর্পণ করিয়া, কৃতকার্য্যতাবশতঃ বিষয়কার্য্য হইতে বিরত হইয়াছি। সম্পূর্ণরূপে ভুক্ত লোকের কি কখনও পুনরায় ভোজনের ইচ্ছা হইতে পারে? ॥৬১॥

अन्वयः—तनयादानं सुतपुत्रविवाहदर्शनं (च) ईदृशं अशेषं मे अननुष्ठितं कार्य्यं अस्ति । करणीयशेषिता नहि शक्या ॥६२॥

सुतेति । प्रथमं तनयायाः रुक्मिण्याः दानम्, परञ्च सुतस्य पुत्रस्य पुत्रः पौत्रस्तस्य विवाहदर्शनञ्च, ईदृशमशेषम्, मे अननुष्ठितकार्य्यम् असम्पादितं कर्म्म अस्ति । तथाहि, करणीयानां कर्त्तव्यकर्म्मणां शेषिता अवशेषकरणम्, नहि शक्या न खलु जनानां शक्तिसाध्या; तेषामनन्तत्वादित्याशयः ।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥६२॥

বাঙ্গালা—কন্যা সম্প্রদান ও পৌত্রের বিবাহদর্শন এইরূপ অশেষ-

जननावधि संयमी भवान्
नहि संसाररसं समन्वभूत्।
अतएव तु मां वदत्यदो
न धनी वेत्ति हि दीनवेदनाम् ॥६३॥
सुदृशः सदृशं न दृश्यते
मम पुत्र्या भुवि पात्रमत्र यत्।

কার্য্য আমার অননুষ্ঠিত রহিয়াছে। কারণ, দৈবের শেষ করা মানুষের শক্তিসাধ্য নহে ॥৬২॥

अन्वयः—जननावधि संयमी भवान् संसाररसं नहि समन्वभूत्, अतएव तु मां अदः वदति। हि धनी दीनवेदनां न वेत्ति ॥६३॥

जननेति। जननावधि संयमी पूर्वसुकृतिवशात् योग्यकाले संयमी धारणादिमान् इन्द्रियनिग्रहवान् वा भवान्, संसाररसं सांसारिकावस्थाम्, नहि समन्वभूत् न सम्यगनुभूतवान्; कदाचित् संसारिसंसर्गात् कथञ्चिदनुभूतश्चानेवेति भावः। अतएव तु माम्, अदः इदम्, वदति पुनः संसारीभवितुमुपदिशति। हि तथाहि, धनी जनः, दीनस्य दरिद्रस्य जनस्य वेदनां दारिद्र्यदुःखम्, न वेत्ति न जानाति।

अत्र संसाररसानुभवाभावं प्रति संयमिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥६३॥

বাঙ্গালা—দেবর্ষি! আপনি জন্মাবধি সংযমী; সুতরাং সংসারের রস সম্যক্ অনুভব করেন নাই; এই জন্যই আমাকে এইরূপ বলিতেছেন। দেখুন, ধনী লোক দরিদ্র লোকের দুঃখ বোঝে না ॥৬৩॥

वरमाहुरयोग्ययोगतः
चिरकौमारमहो महाधियः ॥६४॥
अथ भूपमुवाच नारदो
रददीप्तो द्विजेन्द्रभास्वरः ।
सति कर्मणि धर्मकारणे
महिलाप्रेम कृतो महायशः ॥६५॥

अन्वयः—सुदृशः मम पुत्र्याः सदृशं पात्रं अत्र भुवि क्वचिदपि न दृश्यते । अहो ! महाधियः अयोग्ययोगतः चिरकौमारं वरं आहुः ॥६४॥

सुदृश इति । शोभने दृशौ चक्षुषी यस्यास्तस्याः सुदृशः, मम पुत्र्याः कन्यायाः सुविलक्षणायाः, सदृशं योग्यम्, पात्रम्, अत्र भुवि क्वचिदपि न दृश्यते, तत एव विषादोऽयं ममेति भावः । अथ यस्मै कस्मैचित् कन्या दीयतामित्याह वरमिति । अहो देवर्षे ! महाधियः महाबुद्धयो जनाः, अयोग्ययोः कन्यावरयोर्योगतः संयोजनात्, चिरकौमारं चिरकालीनामविवाहितावस्थामेव कुमारीत्वमियम्, आहुर्वदन्ति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनु-प्रासस्य चानुमानस्य चैतयोः संसृष्टिः ॥६४॥

বাঙ্গালা—দেবর্ষি! এই পৃথিবীতে আমার সুলোচনা কন্যার উপযুক্ত পাত্রই যে দেখিতে পাইতেছি না। বুদ্ধিমান্ লোকেরা বলেন, অযোগ্য বর-কন্যার যোগ করা অপেক্ষা বরং তাহাদের চিরকৌমারই ভাল" ॥৬৪॥

अन्वयः—अथ द्विजेन्द्रभास्वरः नारदः रददीप्तः (सन्) भूपं उवाच । धर्मकारणे सति कर्मणि महिलाप्रेम महत् महायशः (भवति) ॥६५॥

अपरप्रथितं निजं यशो
न यशस्वी स्वयमेव भाषते ।

---

"प्रगाढ्ये"त्यादिना यत् प्रागुक्तं तत् प्रतिवदति नृपत इति । हे नृपते ! गृहिणां गृहस्थानाम्, गृहक्रिया सांसारिककार्य्यम्, अनन्ता अपरिशेषा, इति यदिगद्यते त्वया उच्यते, तन्न वक्तव्यम् । भुवने, परमेशः परमात्मा शेषः अनन्तनागश्च तयोस्तृतीये क्वचिदपि पदार्थे, अनन्तता परिशेषशून्यत्वम्, न अस्ति । तथा च, "न जायते म्रियते वापि कश्चित्" इत्यादिश्रुत्या परमात्मनो नित्यतया ध्वंसाभावादनन्तत्वं शेषनागस्य च तद्वदनन्तनामकत्वं रूढम् । ननु "दिक्कालावीश्वरातिरिक्तौ" इत्येतन्मते दिक्कालयोः परमेशरूपतयानन्तत्वे सिद्धेऽपि आकाशादीनां नित्यतया अनन्तत्वसत्त्वेन "अनन्तं सुरवर्त्म खम्" इति तत्पर्य्याये अनन्तशब्ददर्शनाच्च कथमुक्तं तयोस्तृतीये क्वचिदप्यनन्तता नाप्नोति चेत्, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति श्रुत्या आकाशस्योत्पत्तिमत्त्वात् ध्वंसस्याप्यवश्यम्भावात् न वास्तविकमनन्तत्वम्, अपि तु अनन्तनागवदनन्तनामकत्वं रूढम् । अथवा शेषपदमाकाशादीनामप्युपलक्षणमिति नानुपपत्तिः । अस्ति च तत्रासमाप्तत्वेन सांसारिककार्य्येष्व इत्याशयः ।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥६६॥

বাঙ্গালা—রাজা! আপনি যে বলিলেন—'গৃহস্থগণের গৃহকার্য্য অনন্ত' তাহা নহে। কারণ, জগতে এক পরমেশ্বর আর শেষনাগ—ইঁহাদের তৃতীয় কোন পদার্থেই অনন্ততা নাই ॥৬৬॥

स्वविबोधकप्रत्ययोदये
प्रविपर्य्येति विभक्तिरर्थभाक् ॥६७॥

अन्वयः—यशस्वी अपरप्रथितं निजं यशः स्वयं एव न भाषते । स्वविबोधकप्रत्ययोदये अर्थभाक् विभक्तिः प्रविपर्य्येति ॥६७॥

"पितृराज्यमजय्यविक्रम" इत्यादिना राज्ञा स्वयमेव यत् स्वयशः कीर्त्तितम्, तत्र विरतः सचार्थ अमरेति । यशस्वी जनः, अपरैर्जनैः प्रथितं प्रख्यातम्, निजं स्वकीयं यशः, स्वयमेव न भाषते । स्वविबोधकप्रत्ययानां कर्त्तृकर्म्मादिबोधकप्रत्ययानामुदये धातोः परं जायमानत्वे सति, अर्थं कर्त्तृकर्म्माद्यभिधेयं भजते आश्रयति व्याप्नोतीति अर्थभाक्, विभक्तिः तृतीयाद्वितीयादिः, प्रविपर्य्येति कर्त्तृकर्म्मादिपदेभ्यः अपगच्छति । अयमाशयः भावः—चैत्रो गच्छतीत्यादौ "प्रत्ययः परः" इति परिभाषया "शेषात् कर्त्तरि परस्मैपदम्" इत्यनेन कर्त्तरि वाच्ये गमधातोस्तिविभक्तिरूपप्रत्यये जाते तेन च कर्त्तुरभिधाने "कर्त्तरि च" इत्यनेन चैत्रशब्दाद्विहितायास्तृतीयाविभक्तेः "उक्तार्थानामप्रयोगः" इति न्यायादपगमः, परन्तु लिङ्गार्थमात्रे प्रथमा, इत्यत्र उक्तार्थे यथा तिप्रत्ययेनैव कर्त्तुरभिधानात् कर्त्तरि तृतीयाया निवृत्तिस्तथा स्वयशसः परैः प्रख्याने स्वस्य तत्प्रख्यानाद्विवृत्तिरेवोचितेत्यतिसुन्दरः श्लोकः ।

अत्र यशस्वीति सामान्यात् बोधकप्रत्ययसन्निधिविशेषः प्रतीतिरप्रस्तुतप्रशंसालङ्कारः, अभावस्य प्रति अपरप्रथितपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, दृष्टान्तः, वृत्त्यनुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

निजशब्दः स्वात्मवचन आत्मीयवचनश्च । तथा च "निजनिर्म्मितकारिकावलीम्" इति शिवरामत्रिपाठ्याभाष्यवचनो निजशब्दः ।

अथवा स्वयमेव वक्ति चेत्
स्वकृतिं स्याद्विमुखस्तदा परः।
वदते हि पदं स्वमेव यत्
क्रियया तत्र तदन्यदुच्यते ॥६८॥

---

"मलीमसः शुक्लतरं निजं यशः" इति कादम्बर्यामात्मीयवचनस्य निजशब्दः। एवञ्चात्मीयवचन एव निजशब्दः। "प्रश्ने वा" इति प्रशब्दात् पूर्ववर्त्तिनो ह्रस्ववर्णस्य विकल्पेन दीर्घत्वाङ्गीकारात् अत्र तृतीयपादे न छन्दःपतनादोषः। "झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते!" इति कालिदासप्रयोगवत्। "प्राप्य नाभिह्रदमज्जनम्" इति माघप्रयोगवच्च ॥६७॥

বাঙ্গালা—অন্যে যদি নিজের যশ বলে, তাহা হইলে যশস্বী লোক নিজে আর তাহা বলেন না। ধাতুর উত্তর কর্ত্তৃকর্ম্মাদি বোধক প্রত্যয় জন্মিলে, তত্তদর্থবোধিকা বিভক্তি অন্তর্হিত হইয়া যায় ॥৬৭॥

अन्वय.—अथवा स्वयं एव चेत् स्वकृतिं वक्ति तदा परः विमुखः स्यात्। हि यत् पदं स्वं एव वदते तत्र क्रियया तदन्यत् उच्यते ॥६८॥

पक्षान्तरे यशस्विनः स्वयं स यशो भाषणे दोषमाह अथवेति। अथवा, यशस्वी जनः, स्वयमेव चेत्, स्वकृतिं निजकार्य्यनिबन्धनं यशः वक्ति; तदा परो जनः, विमुखस्तत् यशोभाषणे पराङ्मुखः स्यात्, "उक्तार्थानामप्रयोग" इति न्यायादिति भावः। अत्रापि दृष्टान्तमाह वदत इति। हि तथाहि, यत् पदं कर्त्तृ, स्वमात्मानमेव वदते; तत्र स्थले, क्रियया, तदन्यत् तत्पदमिव वस्तु उच्यते। अत्रायमाशयः—रामो ग्रामं गच्छतीत्यादौ ग्राममिति कर्म्मणि द्वितीयान्तं पदं स्वगतं

विषये चिरनिस्पृहा अपि
नहि विज्ञा न वयं कथञ्चन।
किमसौ रजनी दिवेति वा
मनुते किं मुदितेक्षणोऽपि न ॥६८॥

---

कर्म्मत्वमेव वक्ति। ततश्च गच्छतीति कर्त्तरि तिप्रत्ययान्तया क्रियया कर्म्मानुक्ता कर्त्तैवोच्यते। ततश्च त्वया स्वयं स यशोभाषणे वयं तत्पराङ्मुखा भवाम इत्ययमपि परममनोहरः श्लोकः।

अत्रापि पूर्ववदप्रस्तुतप्रशंसालङ्कारो दृष्टान्तश्चानयोः परस्पर-निरपेक्षतया संसृष्टिः।

वदत इति चौरादिकस्य णिकर्म्मन्तस्यात्मनेपदिनो वदधातोः प्रयोगः ॥६७॥

বাঙ্গালা—অথবা যশস্বী লোক নিজেই যদি নিজের যশ বলেন, তাহা হইলে অন্য লোক সে বিষয়ে পরাঙ্মুখ থাকে। কারণ, যে স্থলে যে পদটী নিজেই নিজেকে বলে, সে স্থলে ক্রিয়া তদ্ভিন্ন পদার্থকে বলিয়া থাকে ॥৬৮॥

अन्वयः—विषये चिरनिस्पृहाः अपि वयं न विज्ञाः (इति) कथञ्चन नहि। असौ किं रजनी वा दिवा इति मुदितेक्षणः अपि न किं मनुते ॥६८॥

"जननावधि संयमी भवान्" इत्यादिना यदुक्तं तत् प्रतिवदति विषय इति। विषये स्रक्चन्दनवनितादौ तद्भोग इत्यर्थः, चिरनिस्पृहा अपि वयम्, न विज्ञाः सांसारिकव्यापारान् न जानीमः, इति कथञ्चन केनचित् प्रकारेणापि नहि सम्भवति; सांसारिकजनसंसर्गात् प्रायेणैव सांसारिकव्यापाराभिज्ञतेति भावः। असौ किं रजनी रात्रिः, वा दिवा दिवसः, इति, मुदितेक्षणोऽपि मुद्रितनयनोऽपि जनः, न किं

वरदुर्लभतानिबन्धनं
किमदत्तैव सुता वसेच्चिरम् ।
नहि तत् कति सन्ति सद्वराः,
न च को वाञ्छति सान्द्रचन्द्रिकाम् ॥७०॥

नतुते न किं मुह्यति ? अपि तु मुह्यत एवेत्यर्थः ; चिरकालीनादनुभवबैलक्षण्यादित्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥६९॥

বাঙ্গালা—রাজা ! আমরা বিষয়ভোগে চিরনিস্পৃহ হইলেও সাংসারিক ব্যাপার যে জানি না ইহা কোন প্রকারেই হইতে পারে না। কারণ, এটা রাত্রি—না দিন—ইহা কি মুদ্রিতনয়ন লোকও বুঝিতে সমর্থ হয় না ? ॥৬৯॥

अन्वयः—सुता वरदुर्लभतानिबन्धनं किं अदत्ता एव चिरं वसेत् ; तत् नहि । कति सद्वराः सन्ति, कः च सान्द्रचन्द्रिकां न वाञ्छति ॥७०॥

प्रकृतमनुसरति वरेति । सुता तव तनया रुक्मिणी, वरस्य दानपात्रस्य दुर्लभतैव निबन्धनं हेतुर्यस्मिन् कर्मणि तद्यथा स्यात्तथा, किम् अदत्तैव सती, चिरम्, वसेद्गृहे तिष्ठेत् ; तत् नहि सम्भवति । तत्रार्थे हेतुमाह कतीति । कति सद्वराः सन्ति । अथ सन्तु नाम, तथापि ते यदि नैनां ग्रहीतुमिच्छेयुरित्याह न चेति । कश्च जनः सान्द्रचन्द्रिकां घनज्योत्स्नाम्, न वाञ्छति । अपि तु सर्व एव वाञ्छतीत्यर्थः ।

अत्र दृष्टान्तोऽलङ्कारः, नहि तदित्यन्तवाक्यार्थं प्रति कतीत्यादिवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्च त्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः ।

"घनं निरन्तरं सान्द्रम्" इत्यमरः ॥७०॥

नृपते! पतितोऽसि विभ्रमे
शृणु वाचीं मम सूनृतामिमाम्।
कमला विमले तवालये
सरसीवाजनि सा सरोजिनी ॥७१॥
करुणातरणिः ससुद्गमो
ननु यस्या धरणीधरीणाम्।

বাঙ্গালা—মহারাজ! পাত্র দুর্লভ বলিয়া আপনার কন্যাটি কি অদত্তা অবস্থাতেই চিরকাল গৃহে থাকিবে? তাহা নহে। কত উৎকৃষ্ট বর আছে। কোন্ ব্যক্তিই বা নিবিড় জ্যোৎস্না কামনা করে না।৭০।

অন্বয়:—নৃপতে! বিভ্রমে পতিতঃ অসি, ইমাং সূনৃতাং মম বাচীং শৃণু। সরসি সরোজিনী ইব সা কমলা বিমলে তব আলয়ে অজনি ॥৭১॥

নৃপত ইতি। হে নৃপতে! বিভ্রমে পতিতোঽসি, যোগ্যবরাভাবাৎ বিবাহেয় কন্যায়াশ্চিরকৌমারাভিপ্রায়করণাদিত্যাশয়ঃ। ইমাং সূনৃতাং সত্যপ্রিয়াং মম বাচীং শৃণু। কাসৌ বাচীত্যাহ কমলেতি। সরসি তড়াগবিশেষে, সরোজিনী পদ্মিনীব, সা জগৎপ্রসিদ্ধা কমলা লক্ষ্মীদেবী, বিমলে নিষ্পাপে তব আলয়ে গৃহে, অজনি কন্যারূপেণ জাতা।

অত্র শ্রৌতোপমাচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ।

"সূনৃতং প্রিয়ে। সত্যে" ইত্যমরঃ ॥৭১॥

বাঙ্গালা—রাজা! আপনি ভ্রমে পতিত হইয়াছেন; অতএব আমার এই সত্য ও প্রিয়বাক্য শ্রবণ করুন। পদ্মিনী যেমন সরোবরে উৎপন্ন হয়, তেমন লক্ষ্মীদেবী আপনার নিষ্পাপ গৃহে উৎপন্ন হইয়াছেন।৭১।

अतिदैन्यतमः प्रतारयन्
तनुते वैभवसम्पदातपम् ॥७२॥
त्रिदिवेशपतिः शतक्रतुः
यदमर्षाद्बहुवर्षवर्त्तिनीम् ।
उपरक्त इव प्रभाकरः
करशून्यः किल दुर्गतिं गतः ॥७३॥

---

अन्वयः—नृप ! यस्याः करुणातरणिः समुद्गतः (सन्) धरणीशरीरिणां अतिदैन्यतमः प्रतारयन् वैभवसम्पदातपं तनुते ॥७२॥

लक्ष्मीं विशिनष्टि करुणेति । नृपेति राजसम्बोधने । यस्याः कमलायाः, करुणा दयैव तरणिः सूर्य्य इति करुणातरणिः, समुद्गत उदितः सन्, धरणीशरीरिणां पृथिवीप्राणिनाम्, अतिदैन्यं नितान्तदारिद्र्यमेव तमोऽन्धकारं तत् अतिदैन्यतमः, प्रतारयन् दूरीकुर्वन्, वैभवसम्पत् धनसम्पत्तिरेव आतपः प्रकाशश्च, तनुते विस्तारितं करोति ।

अत्र साङ्गं समस्तवस्तुविषयं रूपकमलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । यच्छब्दस्योत्तरवाक्यगतत्वेन "आत्मा जानाति, यत् पापम्" इति स्वयंवोदाहरणवत् तच्छब्दानपेक्षत्वात् निराकाङ्क्षतया नेदं युग्मकम् । एवमन्यत्रापि ज्ञेयम् ॥७२॥

अथवा विफलो ममोद्यमः
गुणगाने श्रिय एव सर्वथा ।
गगनस्य रमागुणस्य च
परिमाणे भुवनेषु कः क्षमः ॥७४॥

---

कमलाया अनुग्रहफलमुक्त्वा निग्रहफलमाह त्रिदिवेशेति । त्रिदिवेशानां देवानां पतिः, शतक्रतुरिन्द्रः, यस्या लक्ष्मीदेव्या अमर्षात् कोपात्, उपरक्तो राहुग्रस्तः प्रभाकरः सूर्य्य इव, करैः किरणै राजग्राह्यभागैश्च शून्यः सन्, बहुवर्षवर्त्तिनीं दुर्गतिं दुरवस्थाम्, गतः प्राप्तः किल । लक्ष्मीदेव्या अनुग्रहस्येव निग्रहस्यापि फलं गुरुतरमिवेति भावः ।

अत्र श्रौतोपमाश्लेषयोः संसृष्टिरलङ्कारः ।

"राहुग्रस्ते त्विन्दौ च पूष्णि च । सोपप्लवोपरक्तौ द्वौ" इति "बलि-हस्तांशवः कराः" इति चामरः ।

पुरा किल लक्ष्मीदेवी दुर्वाससः शापेन कोपादिन्द्रं विहाय समुद्रं गता, तदा चेन्द्रो भ्रष्टश्रीः सन् दीर्घकालं मर्त्ये विचचारेति ब्रह्मवैवर्त्त-पुराणवार्त्ता ॥७३॥

বাঙ্গালা—স্বয়ং দেবরাজ ইন্দ্র যাঁহার ক্রোধে রাহুগ্রস্ত সূর্য্যের ন্যায় করশূন্য (কিরণশূন্য, খাজনা আদায় রহিত) হইয়া বহু বৎসর যাবৎ দুরবস্থা প্রাপ্ত হইয়াছিলেন ॥৭৩॥

अन्वयः—अथवा श्रियः गुणगाने एव मम उद्यमः सर्वथा विफलः । भुवनेषु कः गगनस्य रमागुणस्य च परिमाणे क्षमः (स्यात्) ॥७४॥

अथवेति । अथवा, श्रियो लक्ष्मीदेव्याः, गुणानां गाने वर्णने एव मम उद्यमः सर्वथा विफलः । तथा च भुवनेषु को जनः, गगन-

अयि ! यं त्रिजगज्जनन्यपि
जनकं स्वीकुरुते महीपते ! ।
चपलाप्यचला च यद्गृहे
समभाग्यो भवतास्ति तेन कः ॥७५॥

---

स्याकाशस्य, रमाया लक्ष्मीदेव्या गुणस्य च, परिमाणे परिमितौ संख्याने च, क्षमः समर्थः स्यात्, अपि तु कोऽपि नेत्यर्थः ।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, अप्रस्तुतस्य गगनस्य प्रस्तुतस्य रमागुणस्य च परिमाणाक्षमत्वरूपैकधर्माभिसम्बन्धाद्दीपकम्, अर्थापत्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥७४॥

বাঙ্গালা—অথবা, লক্ষ্মীদেবীর গুণবর্ণনে আমার এই উদ্যম সর্বপ্রকারেই নিষ্ফল। কারণ, ভুবনে আকাশের ও লক্ষ্মীদেবীর গুণের পরিমাণ করিতে কোন্ ব্যক্তি সমর্থ হয় ? ॥৭৪॥

অন্বয়:—अयि महीपते ! त्रिजगज्जननी अपि यं जनकं स्वीकुरुते, यद्गृहे च चपला अपि अचला (तिष्ठति), तेन भवता समभाग्यः कः अस्ति ॥७५॥

स्वमतग्रहणार्थं राजानं स्तौति अयीति । अयि महीपते ! भीष्मक ! त्रिजगज्जननी लक्ष्मीदेव्यपि, यं जनकं पितरम्, स्वीकुरुते । यस्य गृहे च चपला चञ्चलापि लक्ष्मीः, अचला स्थिरा सती तिष्ठति । तेन भवता समं समानं भाग्यं यस्य स तादृशः को जनः अस्ति, अपि तु कोऽपि नेति तात्पर्य्यम् ।

अत्र चपलाप्यचलेति विरोधाभासोऽलङ्कारो हत्यनुप्रासेन संसृज्यते ॥७५॥

বাঙ্গালা—রাজা ! ত্রিভুবনের জননীও যাহাকে জনক বলিয়া

जगतां प्रवरं वरं भवान्
स्वसुतायोग्यमुपैष्यति ध्रुवम्।
सह चन्द्रमसैव चन्द्रिका
यदि युक्ता वद का नु वेदना ॥७६॥
सकलोपनिषन्निवेदितः
परमब्रह्मतया च विश्रुतः।
भगवानज एव जातवान्
वसुदेवाद्‌ वकश्यपाकृतिः ॥७७॥

স্বীকার করিতেছেন এবং যাঁহার গৃহে চঞ্চলাও অচলা হইয়া রহিয়াছেন, সেই আপনার তুল্য ভাগ্যবান্ কে আছে? ॥৭৫॥

अन्वयः—भवान् ध्रुवं स्वसुतायोग्यं जगतां प्रवरं वरं उपैष्यति। चन्द्रिका यदि चन्द्रमसा एव सह युक्ता (भवेत् तदा) का वेदना नु वद ॥७६॥

जगतामिति। भवान्, ध्रुवं निश्चितम्, स्वसुतायाः निजकन्यायाः रुक्मिण्याः योग्यम्, जगतां मध्ये, प्रवरं सर्वप्रकर्षेणोत्कृष्टम् वरं पात्रम्, उपैष्यति लप्स्यति। चन्द्रिका ज्योत्स्ना, यदि चन्द्रमसा चन्द्रेणैव सह युक्ता मिलिता भवेत्, तदा का वेदना मनोव्यथा नु, तद्वद।

अत्र दृष्टान्तोऽलङ्कारः, चन्द्रचन्द्रिकयोर्लिङ्गसाम्येन नायकनायिका-व्यवहारसमारोपात् समासोक्तिश्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते ॥७६॥

বাঙ্গালা—রাজা! আপনি অবশ্যই নিজ কন্যার যোগ্য ত্রিভুবনের মধ্যে শ্রেষ্ঠ পাত্র পাইবেন, অতএব যদি চন্দ্রের সহিতই জ্যোৎস্না মিলিত হয়, তবে আর কি দুঃখ থাকিতে পারে বলুন? ॥৭৬॥

अवतारपरम्पराञ्च यः
नटवत् कार्य्यवशाद्युगे युगे ।
जगतामुपकारकारणं
समधासीदविचिन्त्यवैभवः ॥७८॥

अन्वयः—सकलोपनिषन्निवेदितः परमब्रह्मतया विश्रुतः च भगवान् अजः एव धृतकश्यपाकृतेः वसुदेवात् जातवान् ॥७७॥

सकलेति । सकलाभिरुपनिषद्भिर्वेदान्तैः निवेदितः ख्यापितः, परमब्रह्मतया विश्रुतः प्रसिद्धश्च, भगवानजो नारायण एव, धृता कश्यपस्याकृतिः रूपं येन तस्मात् वसुदेवात्, जातवान् ।

अत्र अजो जातवानिति विरोधात् भगवन्महिम्ना च तत्समाधानाद्विरोधाभासोऽलङ्कारः ।

"वेदान्तो नाम उपनिषत्प्रमाणम्" इति वेदान्तसारः । "जन्माद्यस्य यतः" इति वेदान्तसूत्रम् । "कश्यपस्य वसुदेवरूपिणः" इति माघेऽपि ॥७७॥

বাঙ্গালা—সমস্ত উপনিষৎপ্রতিপাদিত এবং পরব্রহ্মরূপে প্রসিদ্ধ ভগবান্ নারায়ণই কশ্যপরূপী বসুদেব হইতে জন্ম গ্রহণ করিয়াছেন ॥৭৭॥

अन्वयः—अविचिन्त्यवैभवः यः च कार्य्यवशात् युगे युगे नटवत् जगतां उपकारकारणं अवतारपरम्परां समधासीत् ॥७८॥

अवेति । अविचिन्त्यं "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेश्चिन्तयितुमप्यशक्यं वैभवं महिमा यस्य सः, यो नारायणश्च, कार्य्यवशात् प्रयोजनानुरोधात्, युगे युगे, नटवत् विभिन्नभूमिकासु नट इव, जगताम्, उपकारकारणम् उपकारहेतुभूताम्, अवताराणां मत्स्यकूर्म्मादीनां परम्परां श्रेणीम्, समधासीद् धृतवान् । "अवतारा ह्यसंख्येया हरेस्सत्त्वनिधेर्द्विजाः" इत्यादिश्रीमद्भागवतोक्तेरिति भावः ।

अथ योगनिरुक्त ईश्वरः
पुरुषः सांख्यमतश्च निर्गुणः ।
अपि सन्मयश्च चिन्मय
इति मीमांसकसम्मतश्च यः ॥७९॥

---

अत्र श्रौतोपमालङ्कारः ॥७८॥

বাঙ্গালা—অচিন্তনীয় মহিমা যে নারায়ণ প্রয়োজনবশতঃ যুগে যুগে নটের ন্যায় জগতের উপকারের জন্য ক্রমিক বহুতর অবতার ধারণ করিয়াছেন ॥৭৮॥

अन्वयः—अथ यः च योगनिरुक्तः ईश्वरः, सांख्यमतः (च) निर्गुणः पुरुषः, मीमांसकसम्मतः च सन्मयः अपि चिन्मयः इति ॥७९॥

अथेति । अथ यश्च नारायणः, योगेन पातञ्जलदर्शनेन निरुक्तो निरूपित ईश्वरः ; "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति पातञ्जलसूत्रात् । सांख्यमतश्च निर्गुणश्चिन्मात्रः पुरुषः ; "असङ्गोऽयं पुरुषः" इति सांख्यसूत्रात् । मीमांसकाभ्यां पूर्वोत्तर-मीमांसाद्वयप्रवर्त्तकाभ्यां जैमिनीबादरायणाभ्यां सम्मतः सम्मत्या निरूपितश्च, सन्मयो सत्स्वरूपः, अपि च चिन्मयश्चित्स्वरूपः, "उपास्यत्वेन देवमिति मीमांसकाः" इति न्यायकुसुमाञ्जल्युक्तेः "माजेयं मन्त्रविग्रहम्" इति स्मृतेः श्राद्धविवेकमूलटीकयोर्व्युत्पत्त्यादिप्रदर्शनाच्च ; "आत्मा परापरग्रहणात्" "आनन्दमयोऽभ्यासात्" इति शारीरकसूत्रद्वयात् । "सत्यं ज्ञानमानन्दं ब्रह्म" "साक्षी चेताः केवलो निर्गुणश्च" इति श्रुतिद्वयाच्च इतिशब्दः स्वरूपवर्णनसमाप्त्यर्थः ॥७९॥

বাঙ্গালা—যিনি পাতঞ্জলদর্শনের মতে ঈশ্বর, সাংখ্যদর্শনের মতে

अधुना नगरीं गरीयसीं
सकलो द्वारवतीमधिष्ठितः ।
नलिनीं नलिनासनो यथा
भगवानुद्भवपालनान्तकृत् ॥८०॥
परिवर्णयितुञ्च यद्गुणां
नृप ! शास्त्राणि चतुर्दशावधि ।

---

নির্গুণ পুরুষ, মীমাংসাদর্শনের মতে মন্ত্রময় এবং বেদান্তদর্শনের মতে চিন্ময় ॥৭৯॥

अन्वयः—अधुना उद्भवपालनान्तकृत् भगवान् सकलः (सन्) नलिनासनः यथा नलिनीं (तथा) द्वारवतीं (नाम) गरीयसीं नगरीं अधिष्ठितः ॥८०॥

अथ तस्य निराकारत्वे कन्यासम्प्रदानासम्भवः साकारत्वे च वैकुण्ठस्थिताय तस्मै कन्यासम्प्रदानामशक्यतेत्याह अधुनेति । अधुना, उद्भवपालनान्तकृत् सृष्टिस्थितिप्रलयकारी, भगवान् नारायणरूपो वासुदेवः, कलाभिः परिजनैः सहेति सकल एव, नलिनासनः पद्मासनो ब्रह्मा, यथा नलिनीं पद्मिनीमधितिष्ठति, तथा द्वारवतीं द्वारकां नाम गरीयसीं विशालां स्वाधिष्ठानेन महागौरवसम्पन्नां वा, नगरीं पुरीम्, अधिष्ठितः अधिष्ठाय स्थितः । अतस्तस्मै कन्यादानं नासम्भवमिति भावः ।

अत्र श्रौतोपमालङ्कारस्य छेकानुप्रासेन संसृष्टिः ॥८०॥

বাঙ্গালা—জগতের সৃষ্টি-স্থিতি প্রলয়কারী সেই ভগবান্ বাসুদেব বর্ত্তমান সময়ে—ব্রহ্মা যেমন পদ্মে অধিষ্ঠান করেন, সেইরূপ বিশাল দ্বারকানগরীতে অধিষ্ঠান করিতেছেন ॥৮০॥

प्रसजन्ति विशश्रमुः परं
समताऽभावजयेव लज्जया ॥८१॥

त्रिजगद्दुरितौघकर्षणात्
दयया भूमिप ! कृष्णपूर्वकम् ।
स्वगुणैः सकलप्रमोदनात्
प्रदधे चन्द्रपरञ्च नाम सः ॥८२॥

---

अन्वयः—नृप ! शास्त्राणि यद्गुणं परिवर्णयितुं चतुर्दशावधि (एव) प्रसजन्ति (न सन्ति) परं समता अभावजया लज्जया इव विशश्रमुः ॥८१॥

परीति । हे नृप ! शास्त्राणि कर्तॄणि, यस्य वासुदेवस्य गुणम्, परिवर्णयितुम्, चतुर्दश अवधयः सीमा यस्मिन् कर्मणि तद्यथा स्यात्तथा एव, प्रसजन्ति प्रवर्त्तमानानि न सन्ति, परम्, समताभावाज्जायत इति सा तया लज्जयेव, विशश्रमुर्विरेमुः ।

अत्र भावाभिमानिनी वाच्या हेतूत्प्रेक्षालङ्कारः ।

चतुर्दशविद्या यथा—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट् ॥ अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥" ॥८१॥

বাঙ্গালা—রাজা ! সমগ্র চতুর্দশ শাস্ত্র যাঁহার গুণ বর্ণনা করিতে প্রবৃত্ত হইয়া পরে অক্ষমতানিবন্ধন লজ্জাবশতই যেন বিরত হইয়াছে ॥৮১॥

अन्वयः—(हे) भूमिप ! सः दयया त्रिजगद्दुरितौघकर्षणात् कृष्णपूर्वकं, स्वगुणैः सकलप्रमोदनात् च चन्द्रपरं नाम प्रदधे ॥८२॥

अथ तस्य किं नामेत्याह त्रिजगदिति । हे भूमिप ! स वासुदेवः, दयया त्रिजगतां दुरितौघस्य पापसमूहस्य कर्षणात् आकृष्याकृष्य

जललेशमपीह यस्मकै
ददता श्रद्दधतैव जीयते ।
तनयां प्रतिपाद्य तत्करे
इह चामुत्र च जीयतां नृप ! ॥८३॥

---

विनाशनाद्धेतोः, कृष्णः कृष्ण इति शब्दः पूर्वस्मिन् यस्य तत्, स्वगुणैः दयादाक्षिण्यादिभिः, सकलस्य जनस्य, प्रमोदनादाह्लादनाद्धेतोश्च, चन्द्रः चन्द्र इति शब्दः परस्मिन् तस्य तत्, नाम कृष्णचन्द्र इति संज्ञाम्, प्रदधे धारयामास ।

कृष्ण इति "कृष विलेखने" इति कृषधातोरौणादिकः कर्त्तरि नक्, चन्द्र इति "चदि आह्लादने दीप्तौ च" इति चन्दधातोस्तथैव रक् प्रत्ययः ॥८२॥

বাঙ্গালা—মহারাজ ! তিনি পদ্মাবন্দনঃ ত্রিভুবনের পাপসমূহ নাশ করায় 'কৃষ্ণ', আর আপন গুণে সকলের আহ্লাদ উৎপাদন করায় 'চন্দ্র'—সমুদয়ে 'কৃষ্ণচন্দ্র' এইরূপ নাম ধারণ করিয়াছেন ॥৮২॥

অন্বয়ঃ—नृप ! इह श्रद्दधता (जनेन) यस्मकै जललेशं अपि ददता (सता) जीयते एव, तत्करे तनयां प्रतिपाद्य इह च अमुत्र च (त्वया) जीयतां ॥८३॥

जलेति । हे नृप ! इह जगति, श्रद्दधता श्रद्धाशालिना जनेन, यस्मकै कृष्णचन्द्राय, जलस्य लेशं बिन्दुमपि, ददता सता, जीयते उत्कर्षः प्राप्यत एव, तस्य कृष्णचन्द्रस्य करे हस्ते, तनयां कन्यां रुक्मिणीम्, प्रतिपाद्य दत्त्वा, इह लोके च, अमुत्र परलोके च, त्वया जीयतां सर्वोत्कर्षः प्राप्यताम् । कृष्णसम्प्रदानकदानमात्रस्यैवोत्कर्षहेतुत्वमिति भावः ।

अत्रएवात्र पदार्थहेतुककाव्यलिङ्गद्वयस्य परस्परनिरपेक्षतया संसृष्टिरलङ्कारः ।

"प्रेत्यामुत्र भवान्तरे" इत्यमरः ॥८३॥

इममर्थमुरीकरिष्यति
कमलेशस्तव नास्ति संशयः ।
जलधिः प्रजहाति जाह्नवीं
समुपेतामतिदूरतः किमु ? ॥८४॥

বাঙ্গালা—নরনাথ ! মানুষ শ্রদ্ধাপূর্ব্বক যাঁহাকে জলবিন্দুমাত্রও দান করিয়া উৎকর্ষ লাভ করে, আপনি তাঁহার হস্তে কন্যা দান করিয়া ইহলোকে এবং পরলোকে উৎকর্ষ লাভ করুন ॥৮৩॥

अन्वयः—कमलेशः तव इमम् अर्थम् उरीकरिष्यति संशयः न अस्ति ; जलधिः अतिदूरतः समुपेतां जाह्नवीं किमु प्रजहाति ॥८४॥

ननु कृष्णचन्द्रो यदि मत्कन्यां न ग्रहीष्यतीत्याकाङ्क्षायां स्वकाम्य-सुपसंहरन्नाह इममिति । कमलेशो लक्ष्मीपतिः कृष्णः, तव इममर्थम्, उरीकरिष्यति अङ्गीकरिष्यति ; तव कन्यां ग्रहीष्यतीत्यर्थः । अत्र संशयो नास्ति । तथा च, जलधिः समुद्रः, अतिदूरतो हिमालयात्, समुपेतामागताम्, जाह्नवीं गङ्गाम्, किमु प्रजहाति परित्यजति, अपि तु कथमपि नेत्यर्थः ।

अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारः, तथा जलधिजाह्नव्योर्लिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च वृत्त्यनुप्रासेन संसृज्यते ॥८४॥

বাঙ্গালা—মহারাজ ! কৃষ্ণ অবশ্যই আপনার এই বিষয় স্বীকার করিবেন । কারণ, সমুদ্র অতিদূর হইতে আগত গঙ্গাকে পরিত্যাগ করে কি ?" ॥৮৪॥

इति सुनीतिकथां कथयन्मुनिः
स विरराम रमापतिभक्तिमान् ।
क्षितिपतिस्तु भवेज्जगतीपतिः
स्वतनुजापतिरित्यगमन्मुदम् ॥८५॥
पदसरोजरजोऽथ रजोहरं
प्रणमनार्थनते मुनिमूर्द्धनि ।
स वितरन् स्वसमागमगासुकीं
सुमुदमन्तरधान्मुनिराटधत् ॥८६॥

अन्वयः—रमापतिभक्तिमान् सः मुनिः इति सुनीतिकथां कथयन् विरराम। क्षितिपतिः तु जगतीपतिः स्वतनुजापतिः भवेत् इति मुदं अगमत् ॥८५॥

इतीति। रमापतौ कृष्णे भक्तिमान्, स मुनिर्नारदः, इति पूर्वोक्त-प्रकारेण, सुनीत्याः कथा सुष्ठु न्यायस्य वाक्यमिति सा ताम्, कथयन् विरराम। क्षितिपतिर्भीष्मकस्तु, जगतीपतिः कृष्णः, स्वतनुजाया रुक्मिण्याः पतिर्भवेत्, इति हेतोः, मुदमानन्दम्, अगमत् प्रापत्।

अत्र छेकानुप्रासोऽलङ्कारः।

अस्मिन् परस्मिंश्च श्लोके द्रुतविलम्बितं नाम वृत्तम्—"द्रुतविलम्बित-माह नभौ भरौ" इति लक्षणात् ॥८५॥

বাঙ্গালা—দেবর্ষি নারদ এইরূপ ন্যায়সঙ্গত কথা বলিয়া বিরত হইলেন। আর জগৎপতি কৃষ্ণ আপন কন্যার পতি হইবেন, ইহা ভাবিয়া ভীষ্মকরাজা বিশেষ আনন্দ লাভ করিলেন ॥৮৫॥

अन्वयः—अथ सः मुनिः प्रणमनार्थनते मुनिमूर्द्धनि रजोहरं पदसरोजरजः वितरन् स्वसमागमगासुकीं सुमुदं आदधत् (सन्) अन्तरधात् ॥८६॥

प्रकामकमनीयतां प्रवितरीतुकामः सुतां
सुरारिकरपल्लवे लिपिमसौ नृपो लेखयन् ।
ससर्ज निजसूनवे नवनृपाय यामञ्जसा
सुतोद्वहननाटके भवति सा स्म प्रस्तावना ॥८७॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये चतुर्थः सर्गः ॥४॥

पदेति। अथ भीष्मकस्यानन्दलाभानन्तरम्, स मुनिर्देवर्षिर्नारदः, प्रणमनार्थं प्रणामाय नतौ अवनतीकृते, मुनौ राजर्षेर्भीष्मकस्य मूर्द्धनि मस्तके, रजोहरं रजोगुणजनितदुःखनाशकम्, पदसरोजस्य आत्मनः पादपद्मस्य रजो धूलिम्, वितरन् ददानः, स्वस्य आत्मनः समागमेन उपस्थित्या गन्तुकीमागमनशीलाम्, सुमहदं महा आनन्दम्, आदधत् जनयन् स सन्, अन्तरधात् अन्तर्हितोऽभूत्।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयो संसृष्टिरलङ्कारः।

गन्तुकीति गमधातोः "स्मृ-कम-गम—" इत्यादिना उकञि नद्यादित्वादीप्रत्ययः ॥८६॥

বাঙ্গালা—তদনন্তর ভীষ্মকরাজা দেবর্ষি নারদকে নমস্কার করিবার জন্ম মস্তক অবনত করিলে, দেবর্ষি নারদ দুঃখনাশক আপন পাদপদ্মের ধূলি সমর্পণ করিয়া, নিজের আগমননিবন্ধন ভীষ্মকরাজার বিশেষ আনন্দ জন্মাইয়া অন্তর্হিত হইলেন ॥৮৬॥

अन्वयः—असौ नृप मुरारिकरपल्लवे प्रकामकमनीयतां सुतां प्रवितरीतुकामः (सन्) अञ्जसा यां लिपिं लेखयन् नवनृपाय निजसूनवे ससर्ज, सा सुतोद्वहननाटके प्रस्तावना भवति स्म ॥८७॥

भाविसर्गं सूचयन् रुक्मिणीविवाहप्रस्तावमाह—प्रकामेति। असौ

नृपो भीष्मकः, मुरारेः कृष्णस्य करपल्लवे, प्रकामा पर्य्याप्ता कमनीयता कान्तिर्यस्यास्ताम्, सुतां रुक्मिणीम्, प्रतिपादयितुकामः सम्प्रदातुमिच्छन् सन्, अञ्जसा द्रुतम्, यां लिपिं लिपिम्, लेखयन् केनचिन्मुनिकुमारेणेति शेषः। नवं नृपाय नूतनभूपालीभूताय, निजसूनवे आत्मपुत्राय रुक्मिणे, ससर्ज प्रेषयामास; सा लिपिः, सुतायाः कन्यायाः रुक्मिण्याः उद्वहन विवाह एव नाटकम् आमोदजनकतया रूपकविशेषस्तस्मिन्, प्रस्तावना आमुखरूपा, भवति स्म; प्रस्तुतविषयस्य प्रथममवतारकत्वादित्याशयः।

अत्र सुतोद्वहने नाटकत्वारोपो लिप्यां प्रस्तावनात्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चैतेषां मिथो निरपेक्षतया संसृष्टिः।

“लिपिर्लिबिरुभे स्त्रियाम्” इति “स्रङ्क्षु झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते” इति चामरः ।

अत्रापि “प्रत्ये वा” इति विकल्पात् प्रस्तावनेति प्रशब्दस्य पूर्ववर्त्तिनो ह्रस्वस्यापि न दीर्घ इति न च्युतसंस्कारदोषः।

पृथ्वी वृत्तम्—“जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः” इति लक्षणात् ॥८७॥

इति श्रीहेमचन्द्रतर्कवागीशविरचितायां रुक्मिणीहरणटीकायां
शिशुहितायां चतुर्थः सर्गः ॥४॥

বাঙ্গালা—ভীষ্মকরাজা কৃষ্ণের করপল্লবে অসাধারণ সুন্দরী রুক্মিণীকে দান করিবার ইচ্ছা করিয়া কোন মুনিকুমারদ্বারা যে লিপি (পত্র) লেখাইয়া, আপন পুত্র নূতন রাজা রুক্মীর নিকট প্রেরণ করিলেন; সেই লিপি-(পত্র) খানিই রুক্মিণীর বিবাহরূপ নাটকের প্রস্তাবনাস্বরূপ হইল ॥৮৭॥

# पञ्चमः सर्गः ।

—:o:—

याचि याचिकहरो गुरुदत्तः
कुण्डिनाख्यनगरीमगमत् सः ।
लीलया कमलया चिरगूढां
विष्वगुज्ज्वलितकान्तिमवन्तीम् ॥१॥

निर्भयश्च सहसा महसाढ्ये
आगते परिचिते नृपदूते ।
गोपुरं परिजहौ प्रतिहारी
को न विश्वसिति वा सति लोके ॥२॥

दुर्गमेऽप्यविदिता गुरुसारे
सञ्चरत्प्रचुरतत्त्वविचारे ।
धीरबोध इव दर्शभयाढ्ये
प्राविशत् स नगरे छतमध्ये ॥३॥

लोकलोचनफलं वितरन्तीं
भूभृतः परिषदं परिपश्यन् ।
विस्मयोल्लसितनिश्चलनेत्रः
श्रान्तिमागमनजामजहात् सः ॥४॥

आसनान्तिकगतानि समानि
त्रीणि निर्मलमणीनलिनानि ।
कान्तिमन्ति जगदुर्जगदुच्चैः
संसदो रमवतीं सरसीताम् ॥५॥

सभ्यतारकमिनद्विजराजं
नीलचेलजवितानपयोदम् ।
तत् सदो गगनतां समधासीत्
शून्यतान्तु नहि गन्तुमशक्नोत् ॥६॥

लोलचेललुलितं ललितञ्च
मन्दमन्दमकरन्दसुगन्धिम् ।
भ्राम्यदभ्रमरराशिरुपेत्य
पुष्पकाननधिया गुणगायौ ॥७॥

रुक्मिणो नवनृपस्य विचार-
चातुरीमिव विलोकितुकामाः ।
चित्रचित्रपटचित्रितदेवा
भागमन्नपरमं सदुपेताः ॥८॥

स्नेहमाधित मनो मनुजाना
पश्यतामविचलन्नयनानाम् ।
शीतलोज्ज्वलरुचो मणिदीपाः
सज्ज्वलुर्धवलसौधशरीरे ॥९॥

भानुरास्थित न तूग्रमरीचिः
चन्द्रमाः समुदितो न तु रात्रिः ।
चन्द्रसूर्यमणिशालिनि सौधे
राजपीठमभितः सुमनोज्ञम् ॥१०॥

दुर्लभैर्विरचितं मणिपुञ्जै-
र्मञ्जुलासनमयं कमटोपि ।
रोचिषातिरुचिरेण चिरेण
श्रान्तिरन्तमधिगच्छति येषाम् ॥११॥

रत्नदीधितिजटं गजमुक्ता-
च्छत्रदण्डपरिवर्द्धितपुच्छम् ।
दीप्तपीतमणिलोचनयुग्मं
स्वर्णपादमपि वज्रकृतास्यम् ॥१२॥

तत्र संसदि न केवलमुच्चैः
सिंहतां किल निजां निजगाद ।
स्वामिनस्य नृपतेरपि राज-
सिंहतां हतरिपुं प्रममौ च ॥१३॥ (युग्मकम्)

तत्र शक्रसुपमोपलपीठं
निर्मलं मनुजनाथसनाथम् ।
भूतनाथवसतिं विषमाङ्गं
स्वे तरौ लमहसदनकीर्णम् ॥१४॥

रत्नराजिनवराजकिरीट-
प्रांशुगांशुनिचयैर्बहुवर्णैः ।
मौक्तिकस्रगुदितद्युति शुभ्रम्
आतपत्रमफलं कृतमेकम् ॥१५॥

यः प्रवर्णयितुमेकमपीह
लोकपालममितं किल नालम् ।
अष्टदिक्पतिमतांशसमुत्थं
वर्णयेत् स कतमोऽयमवन्याः ॥१६॥

पातकादभिभवाच्च रिपूणां
रक्षति क्षितिमिमां स्म सदा यः ।
पूरुषा कथितवत् परुषास्याः
रक्षिणः समवसन् परितस्तम् ॥१७॥

चन्दनेन्धनकृतं परिधुन्वन्
तालवृन्तमुपशान्तनिदाघम् ।
व्यर्थमागमनमत्र तवेति
दक्षिणानिलमवारयदन्यः ॥१८॥

भूपतेरनुमतिं स्पृहयालुः
लोलतामपि गतो नतशीर्षः ।
धैर्यमर्थ्यमनविद्धजवर्गः
मार्गयन्नपि धनं प्रतिपेदे ॥१९॥

मन्त्रिणं सुविपुलं समदर्शन्
राजकार्यमणुना मनसैव ।
दर्पणे हि विमले तनुमध्ये
बिम्बितं भवति वस्तु समस्तम् ॥२०॥

तोषयन् धनपतिं नृपमेनम्
मन्त्रकश्च नितरामपराध्यन् ।
गीष्पतिं ललितयुक्ति सुवक्ता
योगिनं मुनिगणञ्च ददर्श ॥२१॥

ऊर्द्धगा नृपसभा स्थिरभावा
सा जनौघभरिताऽप्यनिनादा ।
ऊर्म्मिनादमुखरां चपलाश्च
निम्नगामुपजहास सदैव ॥२२॥

धर्म्मराजपरिवर्द्धि सशोभा
नान्तकस्य गमनेऽप्यधिकारः ।
सा सहस्रनयनेन कृतश्रीः
गोत्रभिन्न खलु कथन दृष्टः ॥२३॥

ईदृशीमथ स वीक्ष्य समर्थं
विस्मयं समितिमास्थित दूतः ।
नूतना सकललोकललामा
कस्य नापहरते चन्मसचि ॥२४॥

वीक्ष्य संसदमसुष्य मणीषा
कार्य्यगौरववशात् प्रययासुः ।
राजमन्त्रिविधिमपि न्यसृतच्च
कामिनीव विदधत्यभिसारम् ॥२५॥

भीतभीतमिव दूतमुपेतं
वीक्ष्य सोऽन्तिकगतावनुजज्ञे ।
किङ्करः किल गुरोरपि नीचः
गौरवो विनयिनां हि समीपे ॥२६॥

आधरानतशिरोधर एव
संप्रणम्य निकषा नृपपादम् ।
पत्त्रमाप्तमधि तस्य विसारि
पत्रपत्रिणमतिक्षिपदारात् ॥२७॥

नैचिताक्षरलिपिं परिगृह्य
किम्नु वृत्तमिति शङ्कितचेताः ।
मौनवान् नरपतिः स्वयमेव
निर्निमेषनयनो निपपाठ ॥२८॥

स्वस्ति ते कमलकोमलशील-
शालिने प्रकुरुता वनमाली ।
सा तु सत्यपि चिराय सपत्नी
तां वधूमवधुनोतु न लक्ष्मीः ॥२९॥

निःसरन्त्यपि गृहादगृहचिन्ताम्
ईङ्गितास्मि न परं परिहर्तुम् ।
नो वने निवसनेन मुनित्वं
कृत्स्न शान्तविषयत्वमिदं तत् ॥३०॥

काननेऽपि वसन्नपि कश्चित्
नो गृहव्यवसितुमर्हः ।
अस्तमस्तकगतोऽपि हि मित्रः
पूर्वपर्वतविभां न जहाति ॥३१॥

रुक्मिणो क्रमभृताङ्गविवृद्धिः
उन्नसन्नलिनकान्तिसमृद्धिः ।
मां न चन्दयति चन्द्रकलेव
या परं स्फुटकलङ्कवती स्यात् ॥३२॥

यादृशी गुणवती तव यामिः
नात्र तद्दृढपरामवयामि ।
भावना तदनुरूपवरस्य
नोत्तमा मुदमुपैत्यवरस्य ॥३३॥

अत्र निर्मलमनोगगने मे
भावनामलिनभृत्परिपूर्णे ।
नारदानिलवचोभ्रमवेगात्
उद्गतः सपदि सुधांशुरपूर्वः ॥३४॥

एष तस्य सुमहानुपदेशः
देशकालगुणवंशविविक्तः ।
अन्तरात्मपरमार्थसमेतः
सर्वथैव किल नः समुपास्यः ॥३५॥

सागरादिव यदोर्वंशदेवात्
देवकीतनुजनी रजनीशः ।
कोऽप्यसौ समभवद्‌भविकश्रीः
कृष्णचन्द्र इति नामप्रतीतः ॥३६॥

पूतनानिपतनादि न चित्रं
कंसकंसनकरस्य चरित्रम् ।
तत्र भासति भवेद्यदशेषः
तत्र दृष्टिरिति को हि विशेषः ॥३७॥

कृष्णरेति च मुनिर्मनुते तं
मादृशः कथयता तु किमत्र ।
अन्तरेण तरणिं विचरन्तं
को हि विष्णुपदमानमवैति ॥३८॥

जानकीव जनकालयजन्मा
सा रमाव रमते मम कन्या ।
जन्मजन्मनि हरिं कमते सा
प्रत्यहं दिनविभेव दिनेशम् ॥३९॥

तस्य पाणिकमले कमलाङ्गीं
रुक्मिणीं प्रवितरन् प्रियवत्स ! ।
वेधसो जहि विनिर्मितिनिन्दां
पालयस्व च पितुर्हितवाक्यम् ॥४०॥

सत्यपीह नितरां वनवासी
क्षेमतां तदपि मङ्गलकामी ।
भीष्मको लिखितवान् लिपिमेनाम्
अस्तगोऽपि हरते तम इन्दुः ॥४१॥

वाचयन्निति नृपो विदधे सः
वैमनस्यपिशुनां मुखभङ्गीम् ।
आशयो हृदिगयो हि जनानां
चेष्टया मुखदृशोरनुमेयः ॥४२॥

ज्ञापयन्नगणितां प्रणतिं मे
तातपादनलिने वदिता त्वम् ।
आत्मलोकलपिते मति लभ्ये
मे पितुर्निजलिपेः किमपेक्षा ॥४३॥

यास्ति कारणवती नहि भूयः
सुस्थितो गतपत्रं सुविवेकी ।
कानने निवसतो भवतोऽपि
युज्यते विषयगा नहि चिन्ता ॥४४॥

धारयन् गुरुधुरां धरणीशः
कार्यकार्यविमुखो जडभावात् ।
वारिवाहपिहितो मिहिरो वा
राजते न भजते न च कीर्तिम् ॥४५॥

आश्रितस्य भवतो मुनिवृत्तिम्
एष भुक्तविषयेष्वनुरागः ।
राजतश्च तरणेरुपरागः
सं तनोति नितरां मलिनत्वम् ॥४६॥

योगिहृत्स्वधिगमे चमते यः
तस्य गेहपटुता किमु चित्रा ।
दुष्करो गिरिशिरस्यधिरोहः
कः श्रमः खलु ततः पतने हि ॥४७॥

तद्भवन् ! भव पुनर्भवनाग्नि-
भावुकोऽद्यमयुतो भवियोगी ।
तेन नः फलवती भवितेच्छा
सत्यकृत् प्रियतमो हि समेषाम् ॥४८॥

नारदो बुधवरो समदर्शी
जञ्जरो यदि हरिं प्रशशंस ।
तत् प्रमाणमिह नास्य गुणित्वे
सर्व एव सुहृदो गुणवर्णी ॥४९॥

पूर्वमेव भगिनीमनुरूप-
रूपिणे क्षितिवराय वराय ।
दातुमौत्सुकयुतेन मयैव
प्रेषिता जनपदप्रजनौघाः ॥५०॥

रुक्मिणी चरणगैरुपदिष्ट-
पात्रपाणिकमले यदि गच्छेत् ।
तन्मदीयलिपिरेव भवन्तं
कौमुदीव मुदितं किल कर्त्री ॥५१॥

भाजनैरविविरोधितयैतत्
दुर्नयीव कथयन् स निवृत्तः ।
ह्रियमाणजननामकथापि
शल्यतुल्यविषमा द्विपतः स्यात् ॥५२॥

साथवा विनयिनी प्रकृतिः स्यात्
भूरिभूतिमदमत्तमतीनाम् ।
वारिधिरपटुनाविकतुल्या
नो तरिर्भ्रमिगता स्थिरगन्त्री ॥५३॥

ब्रूहि नो नृपमुनिं सममेतत्
मानलेपनमितं नृपसूनोः ।
तद्भवानपि भविष्यति पृष्टः
दैपभाग भवति कः स्वगिरैव ॥५४॥

श्रीमती नृपसुता प्रकृत्या
श्रीपतिं पतितताश्रयितेव ।
जाह्नवीं जलधिमाजनि यान्तीं
प्राभवत् क इह नाम निषेद्धुम् ॥५५॥

इत्यमुत्तगुणयुक्तगिराथ
बोधितः सपदि कञ्चुकिनाऽसौ ।

भूपतेः कलनवैरनुमत्या
प्रास्थितायमवनं प्रति दूतः ॥५६॥

अथ सूचयन्नवसितिं सदसः
सहसा सदस्यमन उत्सुकयन् ।
किरणैः परिस्फुरदगतैरचलताम्
उदभूत् समं सुषमशङ्खरवः ॥५७॥

अभिवादयन् गुरुजनान् क्रमशः
प्रसभाजयन् सवयसश्च सखीन् ।
प्रियभाषया च सुखयन्ननुगान्
समपासरत् स समितेर्नृपतिः ॥५८॥

अवलोकमान इव तत् उतक्रियः
करसन्चयं मदासयन् प्रभाकरः ।
नवरक्तया सविधवर्त्तिमन्ध्यया
सहितो विवेश चरमाचलोदरम् ॥५९॥

अखिलमवनिभर्त्तुस्तातदूतेन दैन
सममवहितकर्णालापमाकर्ण्य दिक्षा ।
सुमलिनवदनागात् कापि मुग्धा विदग्धा
विरहवदविवस्त्रां रुक्मिणीं स्वां वयस्याम् ॥६०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
पञ्चमः सर्गः ॥०॥

——०:०:०——

## षष्ठः सर्गः ।

——:०:——

स्मरगिरौ चपलामचलामिव
धवलमञ्चतले विलसत्तनुम् ।
शशिमुखी ससखी खलु सा सखी
समगमल्ललितां गलितालकाम् ॥१॥

रुचिरदन्तरुचामचिरोद्‌गता
स्मितसितेन सता बहुलीकृताम् ।
नलिनमालिमुखं कुमुदप्रभम्
उपनयन्त्यनयत् पति. सुता ॥२॥

विजहती सखि ! मां क्व गता कथं
हरति धैर्यमहो विरहस्तव ।
कुमुदिनी नलिनी च परस्परं
नहि विहाय विभाति निजाश्रयम् ॥३॥

श्रवणमुक्तिसुधा, दृगमाकृतिः,
असुखि शून्यमनः प्रकृतिस्मृतिः ।
हरति चाङ्गचयं परिरिप्सुता
सखिवियोगविषं विषमो रिपुः ॥४॥

मलिनता नलिना नलिनानने
विकसिते हसिते विसवत् सिते ।
सकललोकविलोभनलोकने
किमिति भाति यथोषसि सारसे ॥५॥

स्वयमुदेत्ययि! यञ्च परस्परं
न जनकादिषु तादृशसौहृदम्।
सरसिजं सरसि स्थितमेव हि
हसति वीक्ष्य रविं निशि मीलति ॥६॥

इति निवेद्य तदा नृपनन्दिनी
करपुटे परिगृह्य निजासने।
चिरमभिन्नतनुत्वमिवात्मनोः
परिनिवेदयितुं समवीवसत् ॥७॥

ज्ञातपरस्परकण्ठपरिग्रहं
भ्रमदपि तदा युवतिद्वयम्।
न तु सुधा मिलितः खलु तत्र यत्
समुदयादि ततो नहि कण्टकम् ॥८॥

सरभसं परिरभ्य नृपाङ्गजां
गजकरोरुमभाषत सस्मितम्।
चपलतोऽप्यदताम्‌दुताः स्वतः
शिशुयुवप्रवयःसु हि वीक्षिताः ॥९॥

तव किशोरि! तु मादृशयोषिताम्
अवधिरेष परः परिरम्भणे।
सयतनो युवको यदतः परम्
अधिकरिष्यति कण्ठमिमं तव ॥१०॥

सखि ! नवीनजनप्रियतागता
प्रमुदिता किमु नः प्रणयेस्तराम् ? ।
कमलिनी तरणीचरणपुष्पिता
तिरयते हि दलेन कुमुद्वतीम् ॥११॥

यदि सरित् सुचिरं सहचारिणीं
तरिमुपेक्ष्य यियासति सागरम् ।
ननु तदा किमसौ न निवर्त्तते
सहचरत्वकृतं किल सौहृदम् ॥१२॥

विरहजोत्कलिका कलिकां तव
तुदति मामुदजामिव यामिनी ।
मृदुसुमे नवदामविमोचिते
भवति भाविनि ! वा क इवादरः ॥१३॥

तव वियोगविभावनयानया
मम विषादकृतानननीलिमा ।
सुखमयी हि यदा हृदयोदयी
स्फुरति तव मुखे किल कौमुदी ॥१४॥

इति निवेद्य महीपतिनन्दिनीं
छलविषादवती सुदती तदा ।
विधुरिवाचिरकुन्दसुमे कचं
विहसितं दशनेषु दिदेश सा ॥१५॥

अथ यदा धरणीश्वरनन्दिनी
प्रवृते वदितुं विवृतान्तरा ।
मतिमती खलु तव मुखे श्रियः-
पदमदाद्वियतीव सरस्वती ॥१६॥

सकललोकविलोभिविलोकने
दृशनभामि च चेतसि सुस्मिते ।
विशदताजनि, यौवनपूर्वतः
भवति सैव दशा हरिणीदृशाम् ॥१७॥

कुलकलत्रजनेऽतिविरञ्जिनी
चपलता निरुपप्लवधर्मगवे ।
अवहति प्रतिकूलसमीरणे,
चलति गौवलिनी किमुत क्वचित् ॥१८॥

अनुचिता सखि हे ! खलु मत्तता
किमु दिने कभवाऽभवदीदृशी ।
किमथवा दुरितायतनाश्रयात्
ग्रहपरिग्रह एष नवस्तव ॥१९॥

किमपि कारणमत्र विनिह्नुषे
नहि तु धीरतरा तरलायसे ।
विजहती हि समीरसमीरणां
न चलति व्रततिर्न च निम्नगा ॥२०॥

परमतो महतस्तव कैतवात्
सुजन ! बन्धुजनेऽजनि यातना ।
अधिजिगांसुरुदन्तमिमं निजं
जनमृते व्यथते त्वयितो यथा ॥२१॥

प्रणयिनि ! प्रणयाम्बुसुमञ्जलिं
हुतमुदन्तमुदीरय दन्तुरे ! ।
कियदुदाहृतसंहृतवाचिकं
तपति निष्पितमन्तरमग्निवत् ॥२२॥

इति निशम्य गिरं मधुराक्षरां
क्षितिपतेर्दुहितुः सुदती तदा ।
विदधती चिरसुस्थतदन्तरे
कमपि भावमथो नयमभ्यधात् ॥२३॥

पुरत एव चराः सहजेन ते
मृगयितुं सुवरं विनियोजिताः ।
क्रमविवृद्धिमती कुलकन्यका
गुरुरुजा च भृशं सखि ! दुःसहा ॥२४॥

सुरऋषिप्रतिबोधितचेतसा
भगवता तव विप्रहितश्चरः ।
यदुपतिः सुषमाद्दुरःसरः
कमलिनी भवनाय हि रुक्मिणि ॥२५॥

मुररिपो रिपुणा सहजेन ते
निषिषिधे विषयः स हरिग्रहः ।
असुमतां भुवि तत् सुखमीक्ष्यते
सुसुखदैवमहो तदपेक्ष्यते ॥२६॥

सखि ! यतस्व हरेः करगामिनी
प्रभवितुं स्वयमेव पुरःसरी ।
करिकरे चिरगामिसरोजिनीं
न लभतां वनगामुकवत्सकः ॥२७॥

अननुभूतविभूतिगुणः परः
न खलु यावदियात् पत माधवे ।
अलिनिपेयरसा नलिनी किल
न खलु वायसचञ्चुमुपाश्नुतु ॥२८॥

तुदतु नो सखि ! ते मधुराधरं
घनकठोरसतुण्डमनायसा ।
मृदुशिरीषप्रसूनविदारणं
करटचञ्चुपुटेन हि दुःसहम् ॥२९॥

ननु जहीहि भयं कुरु साहसं
व्रज यतस्व मनस्विनि ! मङ्गले ।
सुसमये किमयेऽप्यधुनातनी
न जड़ता भविता तव तापिनी ॥३०॥

न खलु या वदते स्वमनोरथं
परिणये किल बालिशबालिका ।
श्वपचकूपतले ननु जीवनं
स्थगयते भुवि सा हतभागिनी ॥२१॥

त्वयितदुर्दिनमर्हितदीधितिं
पलितमात्र सुखारुणमोक्षते ।
अतिजड़ा बहुला कुलकन्यका
विलसितं हि विधेरतिदुर्गमम् ॥२२॥

किमु वरं वरभर्तृगमोत्सवः
किमथवा त्रपयात्र तिरस्क्रिया ।
श्वशुरलोकुरुपेऽद्य परं यदि
परिणयेन कृतं गुरुलज्जिना ॥२३॥

मधुरिपूरसि भूरिरमाश्रये
भवतु तेऽवनते ! चिरसंश्रयः ।
सुखयते हि न कं कमलानने !
सुरसरित्-सरिदीश्वरसङ्गमः ॥२४॥

नृपसुतालिगिरामथ शृण्वती
किमपि शक्नुवती नहि भाषितुम् ।
न खलु भूतधृतिर्न च वा भयम्
अपि तु सा सहसा विमुमोह च ॥२५॥

विहसितं विगतं गदितं हृतं
विचलिता ललिता च तनूलता।
सततफुल्लमुखेक्षणपद्मयोः
मलिनतैव तया न्यवलम्बित ॥३६॥

निजदशाविहृताविति दृष्टसा
विवरणेऽपि भवेदिति न स्थिरम्।
स्वमतकृज्जनकोऽप्यतिमायवान्
परिणये न पुनः परिवर्त्तनम् ॥३७॥

भयमपास्य हरेः पुरि साहसात्
स्वगमने गणिकामगणना गणे। .
न खलु वाऽविदितो हरिरेष्यति
नहि सहायजनो भुवि कश्चन ॥३८॥

बिसलताम्रदुला क्व नु बालिका
क्व नु च वज्रसमा बहुदुःस्मृतिः।
विकपितं कदलीदलवद्वपुः
भुवि पपात न सा चतुरोत्तरा ॥३९॥ (त्रिभिर्विशेषकम्)

विविधदुःखतरङ्गविभीषिकाम्
अनपनेयतमां परजीवने।
चिरसुखैकगया सरलाशया
प्रतियती सहसा विससाद सा ॥४०॥

चिरविषादविषोल्वणभीषणात्
पतिबिलेशयदुःसहदंशनात् ।
कुलचरित्रतिरोहितिसिक्तचपा-
यवनिकापहृतिः खलु मे वरम् ॥४१॥

इति विचिन्त्य तदा नृपनन्दिनी
समवदाद्विदुषी विदिताखिला ।
प्रददृशे मुकुरे प्रतिबिम्बवत्
मनसि भावचयो विमलात्मने ॥४२॥

यदि लता गलिता मरुताकुला
तरुवरं वरयेत् विकला स्वतः ।
नहि ततो वितता जनगर्हणा
जगति हीनगतिर्हि नृयोषिताम् ॥४३॥

मदजनिर्जननी जनकोऽपरः
कुलविभूतिमहागुणसम्पदान् ।
प्रगणयन्ति न तुच्छलकन्यका-
सुखलवं नियतिर्गुरुदारुणा ॥४४॥

मरणिशुष्कजलापि तरङ्गिणी
जलनिधिं प्रतियाति स्वदन्तरात् ।
विमुखभाग्यकृता कुलकन्यका
न लभतेऽभिमतं न च नीयते ॥४५॥

क्व नु हरी रमणीनयनोत्सवः
क्व च विरक्तजना हतरुक्मिणी ।
न खलु शैवलिनीं नलिनीपतिः
मृगयते न हरिर्हरिणीमपि ॥४६॥

विनयनम्रजनप्रियमाधवः
प्रकमते यदि भीष्मककन्यकाम् ।
असुरपेयसुरामसुजारिणीं
मुनिमनोऽपि तदा कमिता किम ॥४७॥

प्रथममेव मया तु समर्पितं
निरुदयं हृदयं दयितोत्तमे ।
इह हि लोकरविः क्व नु केशवः
स्तशुशान्तरिता क्व च रुक्मिणी ॥४८॥

अयि ! निवेद्य न कृष्णजने स्वकं
परमभीप्सति हन्त सती सती ।
सुरधुनी गिरिराजगुहागृहात्
जलधिमेव ययौ न नदान्तरम् ॥४९॥

किमधुना विपुलं प्रलपामि ते
हरिवियोगविषं सपयाद्गुणे ।
सखि ! शिखोद्गम एव हुताशनं
शमयते यदि नातिविपत्तटा ॥५०॥

इति निशम्य तदा सुदती गिरम्
अभिदधे दधती नृपजाकरम्।
सदृशदुःखसुखा चिरवल्लभा
समवयाश्च सखी खलु दुर्लभा ॥५१॥

समय एष न ते नतकन्धरे!
गुरुविमूढतया स्थगितुं तव।
विविधकार्य्यवशाद्विधुरस्य हि
विपदुपैति जवादिह जन्मिनः ॥५२॥

सपदि कथ्यु किना पटुनाधुना
सुवचने! निजवाचिकमीरय।
गुरुसमीरसमीरितवल्लिका
श्रयति हि स्वयमेव महीरुहम् ॥५३॥

नियतमेव हरिर्भवतीमितो-
ऽमितगुणः प्रणयेद्गुणपक्षगः।
उपसि लोचनगोचरगामिनीं
कमलिनीं द्विरदः किमुपेक्षते ॥५४॥

रचय चारुतरामचिरं लिपिं
ललितकोमलभावविबोधिनीम्।
सहमितो गुरुकम्पवदाशदं
तमयि! कथ्यु चिनं समुपहये ॥५५॥

इदमुदीर्य्य तदैव परागता
सपदि कञ्चुकिना नतिचञ्चला ।
स सह सा सहसा सहसानना
विशति वेश्मवतो नृपजालयम् ॥५६॥

विकचकाशसुमोपमकेशिना
धृतसितातपवारणधारिणा ।
उपरिगे परिपूर्णसुधाकरे
हिमवतेव शरत्समयागमे ॥५७॥

पतितदन्ततया गलिताधरा-
ऽस्फुटपदाक्षरगद्गदभाषिणा ।
पवनदोषवशाच्चलमौलिना
द्रुमदलेन यथा परिशुष्यता ॥५८॥

सनिनदं भुवि दण्डमवास्यता
धृतकमण्डलुदक्षिणपाणिना ।
तनुविभङ्गवता नतवर्ष्मणा
गुणवतेव पुरातनधन्वना ॥५९॥ (कलापकम्)

अथ समीपगतास्य सितात्मनः
कमलकोमलमूर्त्तिरसौ सखी ।
विशदलोमतरोरिव वल्लरी
सविनयं नयवत्तमभाषत ॥६०॥

निमन्त्रणं त्वादृशां भवादृशां
साधीयसीं साधयितुं किल क्रियाम् ।

तदेव वक्तुं वपते मनो न नः
कार्य्यं हि कार्य्याय मनार्य्यमापदि ॥६१॥
अस्याः खलु चिवियतेर्दुहितुर्हि नाथं
द्वारावतास्थितहरेर्ह र पवमेनम्।
एपार्थं ना फलवतो भवितेति मन्ये
नालोकनं हि विफलं पुरुषोत्तमस्य ॥६२॥
अयमचिरमुदन्तो नान्तरा किन्तु वाच्यः
भवति फलवतो चेत् स्वप्रकाशा क्रिया स्यात्।
बहु वदति यदा प्राङ् मूलकल्पस्तदाऽस्यः
वहिरणति विहीनस्तान्तरङ्गो मदङ्गः ॥६३॥
पार्थियार्थं स्वयमुपहृतं राजकन्यासखीभ्यां
लब्धप्रीतिः सविनयनमस्कारमङ्गाय गृह्णन्।
प्रस्यास्येऽहं रजनिविगमे भाषमाणः किलेदं
साकं भूभृद्धितमनसा प्रत्यगादृयादवेशम् ॥६४॥
तृष्णा लघ्वाभियङ्गे भवति बलवता किं भवेदेव लिप्सुः?
लिप्सायां वापि सत्यां प्रभवति किमु वा सम्प्रसारः किशोरः? ।
चिन्ता सन्तापिनीयं वदनमलिनतां सन्ततान व्रजन्त्याः
गौरांगीवां सुधांगोर्विकचकुमुदिनीपद्मजिन्योविव श्रीः ॥६५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
षष्ठः सर्गः ॥०॥

——०:०:०——

# सप्तमः सर्गः ।

—:०:—

श्वस्तने कलरवैः पतत्त्रिणां
तस्य कौशशयनीयशायिनः ।
सूरसूतसहितो धनागमात्
दैन्यशून्यहृदि बोध उद्गतः ॥१॥

अन्वयः—श्वस्तने पतत्त्रिणां कलरवैः कौशशयनीयशायिनः तस्य धनागमात् दैन्यशून्यहृदि सूरसूतसहितः बोधः उद्गतः ॥१॥

श्वस्तन इति । श्वस्तने परदिनप्रत्यूषकाले, पतत्त्रिणां पक्षिणाम्, कलरवैर्मधुरास्फुटध्वनिभिः, कुशानामिदमिति कौशं यत् शयनीयं शय्या तत्र शेते इति तस्य, तस्य ब्राह्मणस्य, धनागमात् दक्षिणीसकाशात् पाथेयार्थलाभात्, दैन्यं पाथेयाभावे यद्दीनत्वं तेन शून्यं यत् हृत् हृदयं तस्मिन्, सूरसूतेन अरुणेन सहितः, बोधश्चैतन्यम्, उद्गत आविर्भूतः ।

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः ।

"श्वः परश्वः परेऽहनि" इति "सूरसूतोऽरुणोऽनूरुः" इति चामरः ।

श्वः परदिने वर्त्तते इति श्वस्तनः "सायं चिरम्" इत्यादिना तनट्-प्रत्ययः । कौशेत्यादि विशेषणेन ब्राह्मणस्य शिरत्वसूचनाद्दौत्ये शाठ्याभावः सूचितः । हृदयस्य निद्राख्यानत्वाद्जागरणस्थानत्वमपि हृदयस्यैवेत्यत उक्तं दैन्यशून्यहृदीति । तथा च मार्कण्डेयपुराणम्—

नित्यकृत्यनियमान् समाप्य स
च्छत्रदण्डककमण्डलून् दधत् ।
भस्मचन्दनविचित्रविग्रहः
प्रास्थिताभि वसुदेवजं द्विजः ॥२॥

---

"नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ मद्गतोऽव्यक्तजन्मनः ॥"

"नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते" इति दर्पणकारोक्तेरस्मिन् सर्गे प्रायेण रथोद्धता वृत्तानि। अष्टाष्टश्लोकान्तरन्तु अन्यान्यवृत्तानि यथास्थानं वक्ष्यामि। तत्रादावष्टसु श्लोकेषु रथोद्धता वृत्तम्—"रात् परैर्नरलगै रथोद्धता" इति लक्षणात् ॥१॥

বাঙ্গালা—প্রভাতকালে পক্ষিগণের কলরবে কুশময়শয্যাশায়ী সেই ব্রাহ্মণের নিদ্রাভঙ্গ হইল এবং তৎকালে অরুণোদয় হইতে লাগিল। পূর্ব্বদিন রুক্মিণীর সখীদের নিকট পথখরচ লাভ করায় ব্রাহ্মণের মনে কোন দৈন্য ছিল না ॥১॥

अन्वयः—भस्मचन्दनविचित्रविग्रहः स द्विजः नित्यकृत्यनियमान् समाप्य छत्रदण्डककमण्डलून् दधत् (सन्) वसुदेवजं अभि प्रास्थित ॥२॥

अथ ब्राह्मणस्य दक्षिणादौत्यकरणाय कृष्णान्तिके प्रस्थानमाह नित्येति। भस्मना चन्दनेन च विचित्रो विग्रहः शरीरं यस्य सः, स द्विजो ब्राह्मणः, नित्यकृत्यानि सन्ध्यावन्दनादीनि नित्यकार्याण्येव नियमास्तान् समाप्य, छत्रञ्च दण्डको यष्टिश्च कमण्डलुर्जलपात्रविशेषश्च तान्, दधत् धारयन् सन्, वसुदेवजं कृष्णम्, अभि लक्ष्यीकृत्य, प्रास्थित प्रस्थितवान् ।

तुर्य्यमम्बरविभागमाव्रजन्
सन्निगाय जगतीं करैरिनः ।
बाल एव बलवान् य उच्चकै-
स्तस्य पादतलगो नगोऽपि हि ॥३॥

---

अत्रापि पूर्व्ववदेवालङ्कारः ।
इत्यङ्कित्यस्थाने कमलत्रयः ॥२॥

বাঙ্গালা—সেই ব্রাহ্মণ ভস্ম ও চন্দনলেপনে বিচিত্র শরীর হইয়া, নিত্যকার্য্য সকল সমাপন করিয়া, ছত্র, দণ্ড ও কমণ্ডলু লইয়া কৃষ্ণের উদ্দেশে প্রস্থান করিলেন ॥২॥

अन्वयः—इनः तुर्य्यं अम्बरविभागं आव्रजन् करैः जगतीं सन्निगाय । हि यः बालः एव उच्चकैः बलवान् नगः अपि तस्य पादतलगः (भवति) ॥३॥

तुर्य्यमिति । इनः सूर्य्यः, तुर्य्यं चतुर्थम्, अम्बरविभागमाकाशांशम्, आव्रजन् गच्छन्नेव, करैः किरणैः हस्तैश्च, जगतीं पृथिवीम्, संजिगाय अन्धकारापसारणेनायत्तीचकार । हि तथाहि, यो जनः, बाल एव, उच्चकैराधिक्येन बलवान् भवेत्, नगः पर्व्वतोऽपि, तस्य, पादतलगः चरणाधोगतः किरणाधोगतश्च भवति ।

अत्र सूर्य्ये कार्य्यसाम्येन प्रबलराजव्यवहारसमारोपात् समासोक्ति-रलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, इत्यनुप्रास-श्छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

"इनः पतौ नृपार्कयोः" इति मेदिनी । "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इति "शैलवृक्षौ नगावगौ" इति चामरः ॥३॥

বাঙ্গালা—ক্রমে সূর্য্য আকাশের চতুর্থভাগে উপস্থিত হইয়া কিরণ-

तीक्ष्णदीधितिरसौ दिवाकरो
यत्र दुःसहतया व्यराजत ।
नैशमन्धतमसं गुहामगात्
स्यात्तु कस्य भुवने चिरोन्नतिः ॥५॥
निम्नगातटपथेन गच्छता
दृश्यते स्म बहुभावदर्शिना ।

---

अन्वयः—असौ तीक्ष्णदीधितिः दिवाकरः यत्र दुःसहतया व्यराजत (तत्र) नैशं अन्धतमसं गुहां अगात् । भुवने कस्य तु चिरोन्नतिः स्यात् ॥५॥

तीक्ष्णेति । असौ तीक्ष्णदीधितिस्तीक्ष्णकिरणः, दिवाकरः सूर्य्यः, यत्र काले, दुःसहतया व्यराजत प्राकाशत ; तत्र काले, निशाया इदमिति नैशम्, अन्धतमसं गाढान्धकारः, गुहां पर्वतकन्दरम्, अगात् अगमत् । तथाहि, भुवने कस्य तु चिरोन्नतिः स्यात् ; अपि तु कस्यापि नैत्यर्थः । निशायामुन्नतस्याप्यन्धकारस्य तदानीमवनत्यैव गुहागमनादिति भावः ।

अत्र कार्य्यसाम्येन सूर्य्ये प्रबलनृपतेः गुहायाञ्च पलायितवैरिणो व्यवहारसमारोपात् समासोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च अनयोरङ्गाङ्गिभावेनानुग्राह्यानुग्राहकभावात् सङ्करः ।

"ध्वान्ते गाढेऽन्धतमसम्" इत्यमरः ।

"अन्ववसमेभ्यस्तमसः" इति टाजादित्वादच्प्रत्ययः ॥५॥

বাঙ্গালা—যে সময়ে তীক্ষ্ণকিরণ সূর্য্য দুঃসহরূপে প্রকাশ পাইলেন, সেই সময়ে রাত্রির গাঢ় অন্ধকার পর্ব্বতের গুহার ভিতরে গমন করিল। কারণ, কোন্ ব্যক্তির চিরকাল উন্নতি থাকে ॥৫॥

यादृशी हि सुषमा स्वभावजा
कृत्रिमा न खलु तादृशी भवेत् ॥६॥
याम्यगम्यतटिनीतटं गता
कापि काञ्चनवसुन्धराङ्गना ।
भूरुहोतविलसत्तरङ्गिणी-
कान्तिकान्तरमणीव भाविव ॥७॥

अन्वयः—निम्नगातटपथेन गच्छता (तेन माध्येन) बहुभावदर्शिना (सता) दृश्यते च। हि स्वभावजा सुषमा यादृशी भवेत् कृत्रिमा तादृशी न खलु (भवेत्) ॥६॥

निम्नगेति। निम्नगाया नद्यास्तटपथेन, गच्छता तेन माध्येन, बहुभावदर्शिना पदार्थानामनेकावस्थादर्शिना सता, दृश्यते च। हि तथाहि, स्वभावजा स्वाभाविकी, सुषमा पदार्थानां परमा शोभा, यादृशी मनोहरदर्शना भवेत्; कृत्रिमा तु सुषमा, तादृशी मनोहरदर्शना न खलु भवेत्।

स्नानात् कचोच्चयमथो परिमार्जयन्त्याः
आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः ।
आस्फालनैः कुचयुगं विजहौ स्वचेलम्
अत्युन्नतौ नहि तिरस्कृतिमुत्सहेते ॥८॥

अन्वयः—स्नानात् अथो कचोच्चयं परिमार्जयन्त्याः आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः कुचयुगं आस्फालनैः स्वचेलं विजहौ । हि अत्युन्नतः तिरस्कृतिं न उत्सहेत ॥८॥

स्नानादिति । स्नानात् अवगाहनात्, अथो अनन्तरम्, कचोच्चयं दीर्घकेशपाशम्, परिमार्जयन्त्याः पृषतो गात्रमार्जन्याघातेन निर्जलं कुर्वत्याः, आर्द्रांशुकस्य परिचितक्लिन्नवसनस्य अन्तरात् मुहुर्मुहुरन्तरात् सरन्ती बहिर्गच्छन्ती नवस्य हेम्नः स्वर्णस्य कान्तिरिव कान्तिर्यस्यास्तस्याः कस्याश्चिदङ्गनायाः, कुचयुगं स्तनद्वयं कर्तृ, आस्फालनैः उत्प्लवनैः, स्वचेलं निजावरणवस्त्रम्, विजहौ तत्याज पातयामासेत्यर्थः । हि तथाहि, अत्युन्नतः पदार्थो जनश्च, तिरस्कृतिमावरणं भर्त्सनञ्च न उत्सहेत सोढुं न शक्नुयात् ।

अत्र स्वभावोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अन्योन्यानुग्राहकत्वाभावे तेषां मिथो नैरपेक्ष्यात् संसृष्टिः ।

इतःप्रभृत्यष्टसु श्लोकेषु वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका त-भ-जा जगौ गः" इति लक्षणात् ॥८॥

दूरादुदञ्चितभुजा ग्रहणे सयत्ना
स्रस्तांशुकं स्तनयुगं सहसावलोक्य।
चेलाञ्चलेन पिदधेऽवहिता तदैव
सख्येरितं वसनमाशु पपात तोये ॥१०॥

হইতেছিল, এই সময়ে তাহার স্তনযুগল আচ্ছাদন করিয়া নিজের আবরণবস্ত্র ফেলাইয়া দিয়াছিল। কারণ, অত্যুন্নত উন্নতপদার্থ আবরণ সহ্য করিতে পারে না ॥৯॥

अन्वयः—यदा उदञ्चितभुजा दूरात् ग्रहणे सयत्ना अवहिता च (काचित् अङ्गना) सहसा स्तनयुगं स्रस्तांशुकं अवलोक्य चेलाञ्चलेन पिदधे। तदा एव सख्या ईरितं वसनं आशु तोये पपात ॥१०॥

दूरादिति। यदा, उदञ्चितौ उत्तोलितौ भुजौ यया सा, दूराद्दूरदेशात्, ग्रहणे सखीनिक्षिप्तस्य शुष्कवसनस्य धारणे, सयत्ना साग्रहा, अवहिता सावधाना च काचिदङ्गना, सहसा झटिति, स्तनयुगम्, स्रस्तं निपतितम् अंशुकं वसनं यस्मात्तत्तादृशम् अवलोक्य, चेलाञ्चलेन वस्त्राभ्यामेवोत्तोलितवसनैकदेशेन, पिदधे तदुन्मुक्तं स्तनयुगम् आच्छादयामास; तदैव, सख्या वयस्यया, ईरितं तीराक्षिप्तम्, वसनं शुष्कवसनम्, आशु शीघ्रम्, तोये नदीजले पपात; उत्तोलितहस्तयोः स्तनयुगावरणे व्यापृतत्वात् तत्रैवावधानाच्चेति भावः।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते।

पिदध इति "धाञ्नह्योरपेरुपसर्गस्यादेः" इत्यपेरकारलोपः।

महाकौतुककरोऽयं व्यापारः ॥१०॥

বাঙ্গালা—কোন রমণী স্নান করিয়া জলের নিকট দাঁড়াইয়া সখীর

बालेन लोलमतिना सलिलात् सलीलम्
आकृष्यमाणपरिधानदुकूलमूला ।
आदित्सुकापरमितश्च समस्तमस्तम्
आकुञ्च्य सस्मितमुखी द्रुतमप्सु मग्ना ॥११॥

নিকটে শুক বস্ত্র চাহিয়া হাত দুইখানি তুলিল এবং দূর হইতে সেই শুক বস্ত্র ধরিবার জন্য সচেষ্ট ও অবহিত হইল, অমনি স্তন দুইটীর উপরের কাপড় পড়িয়া গিয়াছে দেখিয়া তাহা তুলিয়া, যখন স্তনের আবরণ করিতে লাগিল, তখনই সখীনিক্ষিপ্ত সেই শুক বস্ত্রখানি হাইয়া নহর জলে পতিত হইল ।১০।

अन्वयः—लोलमतिना बालेन सलिलात् सलीलं आकृष्यमाण-परिधान-दुकूलमूला (काचित् अङ्गना) अपरं आदित्सुका (आसीत्) इतः च समस्तं अस्तं ; आकुञ्च्य सस्मितमुखी (सती) द्रुतं अप्सु मग्ना ॥११॥

बालेनेति । लोला चञ्चला मतिर्बुद्धिर्यस्य तेन तादृशेन, बालेन शिशुना पुत्रेण, सलिलाज्जलात्, सलीलं सकौतुकं यथा स्यात्तथा, आकृष्यमाणं परिधानदुकूलस्याद्र परिधानवसनस्य मूलमधोदेशो यस्याः सा तादृशी काचिदङ्गना, अपरं शुष्कं वस्त्रम्, आदित्सुका आदातुं ग्रहीतुमिच्छुः आसीत्, इतः अस्यां दिशि च, समस्तं सर्वमेव परिहितमाद्रं वस्त्रम्, अस्तं तेन बालेनाकृष्य जले निक्षिप्तम् । आकुञ्च्य [illegible] गात्रं सङ्कुचय्य सङ्कोचयित्वा, सस्मितं कौतुकात् समुद्गतहास्यं मुखं वदनं यस्याः सा तादृशी सती, द्रुतं झटिति, अप्सु नदीजले मग्ना आकण्ठदेशं जलमग्नेत्यर्थः । कटेरधोभागस्य तदानीं निरावरणतया लज्जानिवारणायेत्याशयः ।

अत्रापि स्वभावोक्तिरलङ्कारो वसन्ततिलकं वृत्तं तयोः संसृष्टिः ॥११॥

बालप्रवाललुलिता च भुजप्रताना
पद्मालिचुम्बनचलनयनप्रसूना ।
दूरोल्लसत्सुमसौरभलोभनीया
हस्तं विना कुचफला ललना लतासीत् ॥१२॥

बाङ्गाला—কোন মহিলা স্নান করিয়া উঠিয়া শুষ্ক বস্ত্র গ্রহণ করিবার ইচ্ছা করিতেছিল ; এমন সময়ে তাহার চঞ্চলমতি বালক পুত্র জল হইতে কৌতূহলের সহিত উহারই পরিধানবস্ত্রের নিম্নদেশ ধরিয়া সবলে আকর্ষণ করিল, তখন তাহার কটিদেশের সমস্ত বস্ত্রই স্খলিত হইয়া গেল ; সুতরাং সেই মহিলা বালকটীকে ভর্ৎসনা করিয়া সহাস্যমুখে তৎক্ষণাৎ কটিদেশপর্য্যন্ত জলে নিমগ্ন করিল ॥১২॥

अन्वयः—ललना बालप्रवाललुलिता भुजप्रताना पद्मालि-चुम्बन-चलनयन प्रसूना दूरोल्लसत्-सुमस सौरभ-लोभनीया कुचफला च हस्तं विना लता आसीत् ॥१२॥

बालेति । ललना काचिदङ्गना, बालो नवयमिव प्रवालः पल्लवस्तेन लुलिता मनोहरा, भुजौ बाहू एव प्रतानौ शाखे यस्याः सा, पद्मानि नयनलोलान्येव चलयो भ्रमराश्रयां चुम्बनेन संयोगेन चलत् स्पन्दमानं नयनमेव प्रसूनं पुष्पं यस्याः सा, दूरे उल्लसत् प्रसरत् यत् सुमनं मनोहरं सौरभं गन्धस्तेन लोभनीया लोभजनिका, कुचौ स्तनावेव फले यस्याः सा तादृशी च, हस्तं विना हस्तावलम्बनव्यतिरेकेण, एकाकिन्या एव तीरे स्थितत्वादिति भावः, लता लतास्वरूपा आसीत् ।

अत्र हस्तं विनेत्यनेन अधिकारूढवैशिष्ट्यरूपकमलङ्कारो हत्यनुप्रास-च्छेकानुप्रासाभ्यां संसृष्टः ।

"अलङ्कारान्तरे मेध्ये बालो बाला स्तुटिस्त्रियोः" इति मेदिनी ।

लोलं दुकूलमनुकूलसमीरणेन
पान्थाः प्रयान्ति च पथि प्रनिरीक्षमाणाः ।
इत्याकुला वसनदूरगतीरतीर्था
माञ्जांशुकेन पिदधे सपदि स्वगात्रम् ॥१३॥

"पल्लवोऽस्त्री किसलयं प्रवालः प्रसवो मतः" इति रभसः । "प्रतानः शाखा" इति रघुनाथः ।

लोभयतीति लोभनीया "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तर्य्यनीयप्रत्ययः "दिग्व्यापिनीर्लोचनलोभनीयाः" इति भट्टिप्रयोगवत् ॥१२॥

বাঙ্গালা—কোনও ললনা নদীর তীরে একাকিনী দাঁড়াইয়া থাকিয়া বৃক্ষব্যতীত লতাস্বরূপ হইয়াছিল। তাহার বসন ছিল—পল্লব, বাহু ছিল—শাখা, নয়নরোমরূপ ভ্রমরগণের সংযোগে তাহার স্তনরূপ পুষ্প দুইটী শোভা পাইতেছিল এবং স্তন দুইটী ছিল—ফল, আর দূরগামী সুন্দর সৌরভে সকলের লোভ জন্মাইতেছিল ॥১২॥

अन्वयः—अनुकूलसमीरणेन दुकूलं लोलं, पान्थाः च प्रनिरीक्षमाणाः (सन्तः) पथि प्रयान्ति इति आकुला वसन-दूरग तीर-तीर्था (काचित् अङ्गना) सपदि माञ्जांशुकेन स्वगात्रं पिदधे ॥१२॥

लोलमिति । अनुकूलः पथिकदर्शनसुविधाकारी यः समीरणो वायुस्तेन, दुकूलं परिधानमार्द्रं वस्त्रम्, लोलं चञ्चलं जातम्; पान्थाः पथिकाश्च, प्रनिरीक्षमाणाः तं लोभनीयं भावं पश्यन्तः सन्तः, पथि प्रयान्ति; इति हेतोः, आकुला विह्वला, वसनं परिधेयं शुष्कं वस्त्रं दूरगं दूरवर्त्ति यस्य तस्मिंस्तादृशे तीरे नद्यास्तटे तीर्था उत्थिता काचिदङ्गना, सपदि द्रुतम्, मञ्जांशुकेन गात्रमार्जनवस्त्रेण, स्वगात्रम्, पिदधे आच्छादयामास ।

प्रक्षालितोज्झितशिशुं तटमीयिवांसम्
आरादरं सुतरलं सलिले तरन्तम् ।
द्रागेकपाणिकमले वसनं वसाना
नाभ्यन्तमग्नमदधात् परितर्जयन्ती ॥१४॥

---

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥१४॥

বাঙ্গালা—কোন রমণী নদীতে স্নান করিয়া তীরে উঠিয়াছিল, তখন তাহার পরিধেয় শুষ্ক বস্ত্র দূরে ছিল, এমন সময়ে প্রবল বায়ু আসিয়া তাহার পরিহিত আর্দ্র বস্ত্র সঞ্চালিত করিতে লাগিল, ওদিকে পথিকেরা তাহার সেই অবস্থা দেখিতে দেখিতে যাইতে থাকিল; সুতরাং সে আকুল হইয়া দ্রুত গাত্রমার্জনীদ্বারা আপন গাত্র আবৃত করিয়া ফেলিল ।১৪।

অন্বয়:—वसनं वसाना (काचित् अङ्गना) तटं ईयिवांसं सुतरलं आरात् अरं सलिले तरन्तं नाभ्यन्तमग्नं च प्रक्षालितोज्झितशिशुं परितर्जयन्ती (सती) एकपाणिकमले द्राक् अदधात् ॥१४॥

प्रक्षालितेति। वसनं शुष्कं वस्त्रम्, वसाना परिदधाना, अतएव स्निग्धं सत् प्रयत्नवधानेति भावः; काचिदङ्गना, तटं नद्यास्तीरम् ईयिवांसं स्नानात् परं गतवन्तम्, सुतरलमतीवचञ्चलस्वभावम्, आराद्-दूरात्, अरं सत्वरम्, सलिले नद्या जले, तरन्तं पतित्वा प्रविशन्तम्, नाभ्यन्तमग्नं नाभिपर्यन्तं जले मग्नञ्च, आदौ प्रक्षालितो जनन्यैव धौतगात्रः परञ्च उज्झितो गात्रमार्जन्या मार्जितगात्रस्येति स चासौ शिशुर्बालकपुत्रश्चेति तम्, परितर्जयन्ती अतीवभर्त्सयन्ती सती, एकपाणिकमले शिशोरेवैकपक्षे, द्राक् झटिति, अदधात् धृतवती ।

नास्ते रसो मदधिकः कुचकुम्भमध्ये
नैवाधिकस्य परिणाहितया किलासौ ।
इत्थं मदज्जलगतं कलसं वहन्ती
काचिद्द्वयायाभिमृष्टं स्तिमितांशुकाङ्गी ॥१५॥

अत्रापि स्वभावोक्तिरलङ्कारस्तौ काव्यमाधेन संसृज्यते ।

“आराद्दूरसमीपयोः” इति “लघु क्षिप्रमरं द्रुतम्” इति “स्राग्-झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते” इति चामरः ।

ईयिवांसमिति इणधातोः क्वसुप्रत्यये रूपम् । एकपाक्षिकमत्र इति “गते यद्वा गौर्नीयते, शाखायां तच्छं छिनत्ति” इत्यादिवदधिकरणे एव सप्तमी । वसानेति “वस आच्छादने” इत्यस्माच्छानचि प्रयोगः ॥१४॥

বাঙ্গালা—কোন রমণী, অত্যন্ত চঞ্চল বালকপুত্রটীকে স্নান করাইয়া এবং গা মুছাইয়া দিলে, সেই বালকটী তীরে যাইয়া উঠিয়াছিল; এমন সময়ে সেই রমণী শুষ্ক বস্ত্র পরিধান করিতেছিল, এই অবসরে সেই বালকটী বেগে আসিয়া আবার জলে নামিয়া নাভিপর্য্যন্ত মগ্ন করিয়াছিল; তখন জননী ভর্ৎসনা করিতে থাকিয়া সত্বর তাহার একখানি হাত ধরিল ॥১৪॥

अन्वयः—कुचकुम्भमध्ये मदधिकः रसः न आस्ते असौ परिणाहितया न एव किल अधिकः इत्थं मदज्जलगतं कलसं वहन्ती स्तिमितांशुकाङ्गी (च) काचित् (ललना) अभिमृष्टं ययौ ॥१५॥

नेति । कुचकुम्भमध्ये ईदृशीनां स्तनकलसाभ्यन्तरे, मदधिको मद्रसादतिरिक्तः, रसो जलं शृङ्गारश्च, न आस्ते न वर्त्तते ; असौ कुचकुम्भः, परिणाहितया विशालतया च नैव किल अधिको मत्तोऽतिरिक्तश्च, इत्थम्, मदन् जलशब्देन वदन्निव माद्यो जलं गतो यस्य स

रात्रिन्दिवं प्रियतमेन ललामलीलाम्
आविष्कृतां सपुलकं पुलिने लपन्ती ।
धत्ते सखीं स्मितमुखीं विविधाभिभङ्गि
प्रायेण हि प्रियगतं युवतिर्ब्रवीति ॥१६॥

जलगलद्धेति तम्, कलसं वहन्ती, स्तिमितमार्द्रं च शुक्लं वसनम् यस्याः सा, तादृशी च काचिदङ्गना, अभिरङ्गं गृहाभिमुखम्, ययौ ।

अत्र जलशृङ्गारयोर्भेदेऽपि रसशब्दस्यैकाभेदाध्यवसायादति-शयोक्तिरलङ्कारः, नहीत्यत्र वाच्यत्वाभावात् प्रतीयमाना क्रियोत्प्रेक्षा वृत्त्यनुप्रासश्चेत्येषां परस्परनिरपेक्षतया संसृष्टिः ।

"रसो गन्धरसे जले" इत्यादि मेदिनी । "परिधाने विधानता" इत्यमरः ॥१५॥

বাঙ্গালা।—'এইরূপ যুবতিগণের কুচকুম্ভমধ্যে আমার রস (জল) অপেক্ষা অধিক রস (শৃঙ্গার) নাই এবং ঐ কুচকুম্ভ বিধাতার আমা অপেক্ষা অধিক নহে' এইরূপই যেন যে কলস গলদেশের জলের শব্দদ্বারা বলিতেছিল, সেইরূপ একটী জলপূর্ণ কলস কক্ষদেশে লইয়া এবং আর্দ্র বস্ত্রই পরিধান করিয়া কোন রমণী গৃহাভিমুখে যাইতেছিল ॥১৫॥

अन्वयः—(काचित् अङ्गना) पुलिने (स्थिता) प्रियतमेन रात्रिन्दिवं आविष्कृतां ललामलीलां सपुलकं लपन्ती (सती) विविधाभिभङ्गि स्मितमुखीं सखीं धत्ते ; हि युवतिः प्रायेण प्रियगतं ब्रवीति ॥१६॥

रात्रीति । काचिदङ्गना, पुलिने नद्याः सिकतामयस्थले स्थित्वेति शेषः, प्रियतमेन पत्या, रात्रौ च दिवा चेति रात्रिन्दिवम्, आविष्कृतां प्रकाशिताम्, ललामां उत्तमां चासौ लीला शृङ्गारभावश्चेति ताम्, सपुलकं सरोमाञ्चम्, लपन्ती वदन्ती सती, विविधा अभिभङ्गि यस्मिन्

 8481 

ज्यायसो पतितदन्तवाससो
धुन्वती समुदिताक्षराम्बरा ।
स्त्रीयपूर्व वयसः सुशीलतां
पप्रथे युवतिषु प्रथीयसीम् ॥१७॥

कस्यैचित् तद्‌यथा तथा, स्मितं सहहास्यं मुखे यस्यास्ताम्, सखीम्, वक्रं विहस्य उवाच । हि तथाहि, युवतिः, प्रायेण बाहुल्येनैव, प्रियगतं पतिविषयकवाक्यम्, ब्रवीति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

"ललाम पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः ।

रात्रौ च दिवा चेति रात्रिन्दिवम् "धेन्वनुडुहादयश्चे"ति निपातः ॥१६॥

বাঙ্গালা—কোন রমণী নদীপুলিনে থাকিয়া নানাবিধ নর্মচর্চা করিয়া রোমাঞ্চিত হইয়া সহাস্যমুখী সখীর নিকটে—প্রিয়তম দিবারাত্র যে উত্তম উত্তম লীলা প্রকাশ করিয়া থাকেন, তাহা বলিতে থাকিয়া প্রকৃত অপেক্ষাও অধিক বিবৃত করিতেছিল। কারণ, যুবতিগণ প্রায়ই প্রিয় পতির কথা বলিয়া থাকে ॥১৬॥

অন্বয়:—ज्यायसी पतितदन्तवाससी धुन्वती समुदिताक्षराम्बरा ( च सती ) युवतिषु प्रथीयसीं स्त्रीयपूर्ववयसः सुशीलतां पप्रथे ॥१७॥

ज्यायसीति । ज्यायसी काचिद्‌वृद्धा, पतिते सुखगह्वरगते च ते दन्तवाससी ओष्ठद्वयञ्चेति ते, धुन्वती अविरतं चालयन्ती, समुदितानि सम्यक्‌चेष्टया सक्तान्यपि अस्फुटानि दन्ताभावादस्पष्टानि अक्षराणि यस्याः यया सा तादृशी च सती, युवतिषु मध्ये, प्रथीयसीमतिमहतीम्,

8481

आत्तयष्टिरतिकम्प्रमस्तका
आनतातिनतपूर्वकायिका ।
हन्त ! क्व पतितं नु यौवनं
मार्गयन्त्यभिययाविवालयम् ॥१८॥

---

स्वीयपूर्ववयसः स्वकीययौवनकालस्य, सुशीलतां सच्चरित्रताम्, पप्रथे प्रकटयामास ।

अत्र स्वभावोक्तिरलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।
.... "वर्षीयान् दशमी ज्यायान्" इति "ओष्ठाधरौ तु रदनच्छदौ दशन-वाससी" इति चामरः ।

पप्रथ इति "प्रथ प्रख्याने" इत्यस्य परोक्षायां रूपम् ॥१७॥

বাঙ্গালা—কোনও বৃদ্ধা স্ত্রী মুখগহ্বরপ্রবিষ্ট ওষ্ঠদ্বয় অনবরত কম্পিত করিয়া বিশেষ চেষ্টাতেও অস্পষ্ট কথাই বলিতে থাকিয়া যুবতি-গণের মধ্যে নিজের যৌবনকালের অত্যন্ত সচ্চরিত্রতার বিষয় বিশেষ-ভাবে বলিয়াছিল ॥১৭॥

अन्वयः—अतिनतपूर्वकायिका अतिकम्प्रमस्तका ( अतएव ) आत्तयष्टिः काचन ( स्त्री ) हन्त ! यौवनं क्व पतितं नु ( इति ) मार्गयन्ती इव आलयं अभिययौ ॥१८॥

आत्तेति । अतिनतो वयोबाहुल्यादतिशयेन वक्रीभूतः पूर्वकायः शरीरोपरिभागो यस्याः सा, अतिकम्प्रं वातरोगात् अतिशयेन कम्पन-शीलं मस्तकं यस्याः सा, अतएव आत्ता हस्तेन गृहीता यष्टिर्दण्डो यया सा तादृशी च, काचन काचिद्वृद्धा, हन्त खेदे, मम यौवनं क्व पतितं नु ? इति मार्गयन्ती पार्श्वद्वये मस्तकचालनात् अन्विष्यन्तीव, आलयं गृहम्, अभिययौ । अन्योऽपि पतितं वस्तु मस्तकं सञ्चाल्यैव भूमावन्विष्यतीति भावः ।

यान्तमन्तिकपथेन सन्ततं
तम्यलोकमवलोक्य सम्मुखम् ।
व्यस्तवस्त्रविकसत्‌कलेवरा
वैमुख्यं गतवती वराङ्गना ॥१९॥

---

अत्र स्वभावोक्तिरलङ्कारः, यौवनस्थितिं प्रति पूर्वविप्रियपदार्थं इव पीतरिति पदार्थं हेतुकं काव्यलिङ्गम्, बाध्या भावाभिमानिनी क्रियोत्-प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥१८॥

বাঙ্গালা—দেহের উপরিভাগ অত্যন্ত অবনত হইয়াছিল এবং মাথাটীও অনবরত কাঁপিতেছিল, এহেন কোন বৃদ্ধ স্ত্রীলোক—'হায় ! আমার যৌবনটী কোথায় পড়িয়া গেল' এইভাবে সেই যৌবনের যেন অন্বেষণ করিতে থাকিয়া গৃহের দিকে যাইতেছিল ॥১৮॥

अन्वयः—व्यस्त-वस्त्र-विकसत्‌कलेवरा वराङ्गना सन्ततं अन्तिकपथेन यान्तं सम्मुखं तम्यलोकं अवलोक्य वैमुख्यं गतवती ॥१९॥

यान्तमिति । व्यस्तं वायुना विक्षिप्तं यद्वस्त्रमाच्छादनं वसनं तस्मात् तदभ्यन्तरात् विकसत् प्रकाशमानं, कलेवरं देहकान्तिर्यस्याः सा, वराङ्गना काचिदुत्तमा युवतिः, सन्ततमनवरतम्, अन्तिकपथेन यान्तं गच्छन्तम्, सम्मुखं आभिमुख्येन, तम्यलोकम्, अवलोक्य, वैमुख्यं पराङ्मुखत्वम्, गतवती प्राप्ता, लज्जावशात् लज्जायाः सम्मुखं नैव अस्थादिति भावः ।

अत्र छेकानुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः ॥१९॥

বাঙ্গালা—কোন সুন্দরী যুবতি স্নান করিয়া গৃহাভিমুখে চলিয়াছিল, এই সময় বায়ু আসিয়া তাহার বস্ত্র সঞ্চালিত করিতে থাকায় দেহকান্তি

नैनिजन्निजमथाङ्गमङ्गना-
वृन्दमन्तररविन्दसुन्दरम् ।
संययौ युवजनोऽवलोकयन्
को न पश्यति हि सान्द्रचन्द्रिकाम् ॥२०॥

প্রকাশ পাইতেছিল, ওদিকে নিকটবর্ত্তী পথ দিয়া সর্ব্বদাই নবা লোক সকল অভিমুখ হইয়া যাইতেছিল, তাহা দেখিয়া সেই যুবতি ফিরিয়া দাঁড়াইতেছিল ॥১৯॥

अन्वयः—अथ युवजनः अन्तररविन्दसुन्दरं निजं अङ्गं नैनिजत् अङ्गनावृन्दं अवलोकयन् संययौ । कः हि सान्द्रचन्द्रिकां न पश्यति ॥२०॥

नैनिजदिति । अथ युवजनः, अरविन्दस्य अन्तरित्यन्तररविन्दम्, पद्मकर्णिका तद्वत् सुन्दरम् उत्तमगौरवर्णतया मनोहरम्, निजम् अङ्गम्, नैनिजत् प्रक्षालयत्, अङ्गनावृन्दम्, अवलोकयन्, संययौ । को हि जनः, सान्द्रचन्द्रिकां निबिडज्योत्स्नाम्, न पश्यति, अपि तु सर्व एव पश्यतीत्यर्थः ।

अत्रोभयोर्वाक्ययोः गम्यसाम्यत्वात् अवलोकयन् पश्यतीति क्रियाभेदेन निर्देशाच्च प्रतिवस्तूपमालङ्कारः, अर्थापत्तिसमानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

नैनिजदिति "णिजिर् शौचपोषणयोः" इति णिजधातोः लङि "निजिविजिविषां गुणः सार्वधातुके" इत्यभ्यासे गुणः । अन्तररविन्देति "अन्तर्गिरमभ्यगात्" इत्यादिवत् अव्ययीभावः ॥२०॥

বাঙ্গালা—পদ্মের কর্ণিকার ন্যায় উজ্জ্বল গৌরবর্ণ যুবতীগণ আপন আপন অঙ্গ প্রক্ষালন করিতেছিল, এমন সময়ে যুবকেরা তাহাদিগকে দেখিতে দেখিতে তীর দিয়া যাইতেছিল। কারণ, কোন্ ব্যক্তি নিবিড় জ্যোৎস্না দর্শন না করে ? ॥২০॥

काचनापि रमणीकुले किल
व्यञ्जती रमणरामणीयकम् ।
विग्रहे पुलकितेऽवलोकिते
शीतलत्वमलपन्नभस्वतः ॥२१॥

सम्भ्रमस्तरुणकामिनीजनः
हेमकुम्भयुगमम्भसि क्षिपन् ।
तुङ्गभङ्गचयभङ्गमादधत्
आजुहाव तटिनीमिवाहवे ॥२२॥

अन्वयः—काचन अपि रमणीकुले रमणरामणीयकं व्यञ्जती (सती) किल पुलकिते विग्रहे (रमणीकुलेन) अवलोकिते (सति) नभस्वतः शीतलत्वं अलपत् ॥२१॥

काचनेति । काचनापि काचिदप्यङ्गना, रमणीकुले अङ्गनासमूह-मध्ये, रमणस्य पत्युः सुरतस्य वा रामणीयकं सौन्दर्य्यम्, व्यञ्जती वाचा विवृण्वती व्यञ्जनया छत्या सूचयती वा सती किल, पुलकिते रोमाञ्चिते, विग्रहे स्वगात्रे, अवलोकिते तेनैव रमणीकुलेन दृष्टे सति, नभस्वतो वायोः, शीतलत्वं शैत्यम्, अलपत् अवदत् । वायोः शीतलत्वप्रयुक्तोऽयं मम रोमाञ्चः, न तु सात्त्विकभावोदयादित्यभिप्रायः ।

अतएवात्र व्याजोक्तिर्नामालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥२१॥

বাঙ্গালা—কোন রমণী সখীগণমধ্যে পতির সৌন্দর্য্য বর্ণনা করিতে-ছিল, তখন তাহার শরীর রোমাঞ্চিত হইয়াছিল, সেই শরীর আবার সে সখীরা দেখিতেছিল, এমন সময়ে সেই রমণী তৎকালের বায়ুর অত্যন্ত শীতলতার কথা প্রকাশ করিতেছিল ।২১।

आगलं गलितकुन्तलावला
मग्नदेहलतिकातिकाञ्चना ।
वारिवेगविगलत् किलांशुकं
घूर्णनात् परिदधे कुतूहलात् ॥२३॥

---

अन्वयः—अम्भसि हेमकुम्भयुगं क्षिपन् सत्वरतरुणकामिनीजनः तुङ्ग-भङ्ग-चय-भङ्गं आदधत् (सन्) आहवे तटिनीं आजुहाव ॥२२॥

सत्वरदिति। अम्भसि नदीजले, हेमकुम्भयुगं स्वर्णकुम्भद्वयम्, तत्तुल्यं स्तनद्वयमित्यर्थः, क्षिपन् सन्, सत्वरं त्वरान्वितो तरुणकामिनीजन इति च तयोक्तः, तुङ्गस्य उन्नतस्य भङ्गचयस्य तरङ्गसमूहस्य भङ्गं पराजयम्, आदधत् जनयन् कुर्वन् सन्, आहवे युद्धे, तटिनीं तां नदीम्, आजुहाव इव आह्वयति स्म व। अन्योऽपि वीरः परबलस्य भङ्गं पराजित्य युद्धे तन्नायकमाह्वयतीति भावः।

अत्र कुचयुगहेमकुम्भयुगयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिरलङ्कारः, "कथमुपरि कलापिनः कलापः" इत्यादिदर्पणोदाहरणवत्, आह्वा भावाभिमानिनी क्रियोत्प्रेक्षा चैकाश्रयानुप्रवेशो इत्यनुप्राणत्वेनैतयोः मिथो नैरपेक्ष्यात् संसृष्टिः।

"भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः" इत्यमरः। "भङ्गो जयविपर्यये" इत्यादिमेदिनी ॥२२॥

বাঙ্গালা—যুবতি রমণীরা স্বর্ণকুম্ভযুগলের তুল্য স্তনযুগল জলে নিক্ষিপ্ত করিয়া সন্তরণ করিতে থাকিয়া উচ্চ তরঙ্গসমূহকে পরাজয় করিয়া, সেই নদীকে যেন যুদ্ধে আহ্বান করিতেছিল ।২২।

अन्वयः—गलितकुन्तला आगलं मग्नदेहलतिका अतिकाञ्चना (च) अबला वारिवेगविगलत् अंशुकं कुतूहलात् किल घूर्णनात् परिदधे ॥२३॥

सन्तरन्त्युपनयन्त्यथोन्मुखी
भारमम्बुनि नितम्बविम्बयोः।
फुल्लहेमकमलान्तिकेऽसृजत्
सालि सत्कलियुगं जलोपरि ॥२४॥

आगलमिति। गलिताः स्खलिताः कुन्तलाः केशा यस्याः सा, आगलं गलदेशपर्यन्तम्, मग्ना जले प्रविष्टा देहलतिका यस्याः सा, काञ्चनं स्वर्णं वर्णेनातिक्रान्तेति अतिकाञ्चना च, अबला काचिदङ्गना, वारिवेगेन विगलत् अङ्गात् प्रायेण स्खलत् अंशुकं परिहितं वस्त्रम्, कुतूहलात् किल, घूर्णनात् देहघूर्णनं कृत्वा, परिदधे।

अत्र स्वभावोक्तिरलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥२३॥

বাঙ্গালা—স্বর্ণ অপেক্ষাও উজ্জ্বল গৌরবর্ণা কোন রমণী চুলগুলি খুলিয়া দিয়া এবং কণ্ঠদেশপর্যান্ত জলে মগ্ন করিয়া অবগাহন করিতেছিল, এমন সময়ে জলের বেগে তাহার পরিধানের বস্ত্রখানি প্রায় চলিয়া যাইতেছিল; তাই সে কৌতুকক্রমে দেহটীকে ঘুরাইয়া সেই বস্ত্র পরিধান করিল ॥২৩॥

अन्वयः—अथ उन्मुखी (काचित्) अम्बुनि नितम्बविम्बयोः भारं उपनयन्ती सन्तरन्ती (सती) जलोपरि फुल्लहेमकमलान्तिके सालि सत्कलियुगं असृजत् (इव) ॥२४॥

सन्तरन्तीति। अथ उन्मुखी उत्ताना काचिदङ्गना, अम्बुनि जले, नितम्बविम्बयोर्भारम्, उपनयन्ती स्थापयन्ती, परञ्च सन्तरन्ती सती, जलोपरि, फुल्लं प्रस्फुटितं यत् हेमकमलं स्वर्णपद्मतुल्यं निजमुखं तस्य अन्तिके, अलिभ्यां भ्रमराभ्यां भ्रमरतुल्यकृष्णवर्णस्तनमुखद्वयेनेत्यर्थः सहेति सालि, तस्य हेमकमलस्य कलियुगं कलिकाद्वयम्, असृजदिव;

उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां
समरमिव चिकीर्षुः पीनतुङ्गस्तरङ्गः।
सरभसमुपहत्य प्राप्तभङ्गो विलीनः
न खलु विजयतेऽस्मिन् भङ्गुरोऽयः स्थिरोऽयम् ॥२५॥

---

हैमकमलकलिकायुगलतुल्यस्तनयुगलमुदतीलयदित्यर्थः। जलान्तरेऽपि पद्मान्तिके तत्कलिकाद्वयमुत्तिष्ठति।

अत्रापि "कथमुपरि कलापिनः कलापः" इत्यादिदर्शयोरस्वरखवत् हैमकमलमुखमण्डलयोः स्वर्णकमलकलिकायुगलस्तनयुगलयोश्च भेदेऽप्य-भेदाध्यवसायादतिशयोक्तिरलङ्कारः, प्रतीयमाना क्रियोत्प्रेक्षा, छेकानु-प्रासश्छेकानुप्रासश्चेत्यनुप्रासश्चैतेषां मिथो निरपेक्षतया संसृष्टिः।

"द्विरेफपुष्पलिङ्भृङ्गषट्पदभ्रमरालयः" इत्यमरः। "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी ॥२४॥

বাঙ্গালা—কোন কামিনী চিৎ হইয়া নিতম্বযুগলের ভার জলে রাখিয়া, সন্তরণ করিতে থাকিয়া, প্রস্ফুটিত-স্বর্ণপদ্মের নিকটে জলের উপরে ভ্রমরযুক্ত সেই স্বর্ণপদ্মেরই দুইটী কলিকা যেন সৃষ্টি করিল ॥২৪॥

अन्वयः—पीनतुङ्गः तरङ्गः उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां (सह) समरं चिकीर्षुः इव (सन्) सरभसं उपहत्य प्राप्तभङ्गः (सन्) विलीनः (अभवत्)। अस्मिन् भङ्गुरोऽयः स्थिरोऽयं न खलु विजयते ॥२५॥

उरसीति। पीनतुङ्गः स्थूलोन्नतः, तरङ्गः, उरसि वक्षसि, विगतं वसनं यस्यास्तस्याः, वक्षसो गलितवसनायाः कस्याश्चिदङ्गनाया इत्यर्थः, पीनतुङ्गौ स्थूलोन्नतौ यौ स्तनौ ताभ्यां सह, समरं सम्प्रयुद्धम्, चिकीर्षुः कर्तुमिच्छुरिव सन्, सरभसं सवेगम्, उपहत्य आघातेनाहत्य, प्राप्तस्तत् स्तनविक्रमेणैव लब्धो भङ्गो द्वैधीभावः पराजयश्च येन स प्राप्त-

भङ्गो जातः ; अतएव विलीनो लयं प्राप्तः पलायनेन लुक्कायितश्चाभवत् ; तथा च अस्मिन् जगति, भङ्गुरोच्चः क्षणविनश्वरोन्नतिः पदार्थः, स्थिरोच्चं चिरन्तनोन्नतिं पदार्थम्, न खलु विजयते, अतएव क्षणविनश्वरोन्नति-तरङ्गः स्थिरोन्नतौ स्तनौ विजेतुं नाशकत्, प्रत्युत पराजित एवाभूदिति भावः ।

अत्र काव्ये वा नदीतरङ्गकामिनीस्तनयुगलयोः मल्लयोधव्यवहार-समारोपात् समासोक्तिरलङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, भग्नतापराजययोर्भेदेऽपि भङ्गपदस्य पेयाभेदाध्यवसायादतिशयोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते । पीनतुङ्गपदस्य उच्चपदस्य च द्विरुक्तावपि न कथितपदतादोषः, उद्देश्यप्रतिनिर्देश्यविषयत्वात् "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इति दर्पणोदाहरणवत् ।

"भाव्यं प्रसन्नगम्भीरम्" "प्रसन्नकर्कशा यत्र" इत्यादिवत् पीनतुङ्ग इति विशेषणयोरपि कर्म्मधारयसमासः । "भङ्गुरोच्चः स्थिरोच्च"मित्यु-भयत्रापि पूर्ववत् विशेषणयोरपि कर्म्मधारयसमास एव, तथा सत्यपि महासुन्दर इत्यादौ महत्त्वस्य सौन्दर्यविशेषणत्वमिव शब्दशक्तिवैचित्र्यात् भङ्गुरतायाः स्थिरतायाश्च उच्चत्वस्यैव विशेषणत्वम् ।

इतःप्रभृत्यष्टसु श्लोकेषु मालिनी नाम वृत्तम्—"न-न-म-य-य-युतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥२५॥

বাঙ্গালা—কোন রমণী কণ্ঠপর্য্যন্ত জলে মগ্ন হইয়া বুকের কাপড় খুলিয়া স্নান করিতেছিল, তখন নদীর একটা স্থূল ও উচ্চ তরঙ্গ সেই রমণীর স্থূল ও উচ্চ স্তনযুগলের সহিত মল্লযুদ্ধ করিবার ইচ্ছা করিয়াই যেন বেগে আসিয়া তাহাতে আঘাত করিয়া ভগ্ন হইয়া লয় পাইয়া গেল।

कुचयुगमतिदूरादूर्म्मिणाभ्यागतेन
सकुतुकमिव चक्रे तुल्यमास्फालनानि ।
न तु पुनरुभयोर्वा तुल्यतासीद्यदाद्यं
जितसुरगिरिशृङ्गं तज्जलं कज्जलाभम् ॥२६॥

---

কারণ, এই জগতে যাহার উন্নতি ক্ষণস্থায়ী, সে কখনও স্থিরোন্নতকে জয় করিতে পারে না ॥২৫॥

अन्वयः—(अङ्गनायाः) कुचयुग सकुतुक इव अतिदूरात् अभ्यागतेन ऊर्म्मिणा (सह) आस्फालनानि तुल्य चक्रे । न तु पुन उभयो तुल्यता वा आसीत्; यत् आद्यं जित सुर-गिरि शृङ्ग, तत् जल (तु) कज्जलाभ (आसीत्) ॥२६॥

कुचेति । कुचयुगं कस्याश्चित् उद्दामयौवनाया अङ्गनायाः स्तनयुगलं कर्तृ, सकुतुकं सकौतुकमिव, अतिदूरात्, अभ्यागतेन अभिमुखमागतेन, ऊर्म्मिणा तरङ्गेण सह, आस्फालनानि तुल्यं चक्रे; अभ्यागतौ अन्तुरामोदमिवेति भावः । न तु पुनः, उभयोः स्तनतरङ्गयोस्तुल्यता वा आसीत् । यद्यस्मात्, आद्यं कुचयुगम्, जिता वर्णगौरवेणाभिभूता सुरगिरेः सुमेरुपर्वतस्य शृङ्गा शृङ्गं येन तथाविधम्; तत् तरङ्गरूपं जलन्तु कज्जलाभं गगनप्रतिबिम्बपातात् घनकज्जलवर्णम्, आसीत्; अतएवानयोः स्तनतरङ्गयोः वर्णवैषम्यात् न तुल्यत्वमिति भावः ।

अत्र प्रतीयमाना गुणोत्प्रेक्षालङ्कारः, उपमानभूततरङ्गापेक्षया उपमेयभूतस्तनयुगस्याधिक्याद्व्यतिरेकः, आर्थीयमाद्यम्, छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥२६॥

বাঙ্গালা—কোনও উদ্দামযৌবনা রমণীর স্তনযুগল অতিদূর হইতে

निशि रमणविमर्दादञ्जनेनाननेन्दुं
विहितमलिनिमानं दृश्यमानं सखीभिः।
मृदु मृदु विहसन्ती पाणिना हेमकान्तिः
सपदि विपदुपेता मज्जनान्तर्ममार्ज ॥२७॥

---

আগত একটী তরঙ্গের সহিত মিলিত হইয়া কৌতুক করিয়াই যেন সমান আস্ফালন করিতে লাগিল; কিন্তু বাস্তবিক পক্ষে সে উভয়ের তুল্যতা ছিল না। কারণ, স্তনযুগল ছিল—স্বর্ণগৌরবে সুমেরুচূড়াবিজয়ী, আর তরঙ্গরূপ জল ছিল—কজ্জলের ন্যায় নীলবর্ণ ॥২৬॥

অন্বয়ঃ—हेमकान्तिः विपदुपेता मृदु मृदु विहसन्ती (च सती) पाणिना निशि रमणविमर्दात् अञ्जनेन विहितमलिनिमानं सखीभिः दृश्यमानं (च) आननेन्दुं मज्जनान्तः सपदि ममार्ज ॥२७॥

निशीति। हेम्नः स्वर्णस्य कान्तिरिव कान्तिर्वर्णो यस्याः सा तादृशी काचिदङ्गना, विपदुपेता सखीनां दर्शनात् लज्जाकुलत्वं प्राप्ता, अथ च कौतुकात् मृदु मृदु विहसन्ती सती, पाणिना, निशि पूर्वस्यां रात्रौ, रमणविमर्दात् सुरतसङ्घर्षात्, अञ्जनेन नयनकज्जलप्रसरणेन, विहितः कृतः मलिनिमा मालिन्यं यस्य तम्, सखीभिस्तद्रूपतया दृश्यमानञ्च, आननेन्दुं मुखचन्द्रम्, मज्जनान्तः स्नानसमयावसरे, सपदि शीघ्रम्, ममार्ज घर्षणेन प्रक्षालयामास।

अत्र शृङ्गाररसस्य लज्जादिभावापेक्षया गुणीभूतत्वात् प्रेयस्वदलङ्कारः छेकानुप्रासेन संसृज्यते ॥२७॥

বাঙ্গালা—পূর্ব্বরাত্রিতে রমণসংঘর্ষবশতঃ নয়নের কজ্জল বিসৃত হইয়া স্বর্ণবর্ণা কোন রমণী চন্দ্রতুল্য মুখখানিকে মলিন করিয়া ফেলিয়া-

पयसि सकुचमग्ना काप्यनुद्विग्ननग्ना
कटितटपरिमुक्तं चालयन्ती दुकूलम् ।
गतवति बहुनीचं वातनुन्ने प्रवाहे
प्रविहृतनिखिलाङ्गी लज्जया द्राङ् ममज्ज ॥२८॥

ছিল, তৎকালে সখীরা আবার তাহা দেখিতেছিল; সুতরাং সেই রমণী লজ্জায় আকুল হইয়া অথ চ মৃদু মৃদু হাস্য করিতে থাকিয়া ডুব দিয়া হস্তদ্বারা সেই মুখখানি মাজিতে লাগিল ॥২৭॥

**अन्वयः**—पयसि सकुचमग्ना (अतएव) अनुद्विग्ननग्ना का अपि कटितटपरिमुक्तं दुकूलं चालयन्ती वातनुन्ने प्रवाहे बहुनीचं गतवति (सति) प्रविहृतनिखिलाङ्गी (सती) लज्जया द्राक् ममज्ज ॥२८॥

**पयसीति ।** पयसि जले, कुचाभ्यां स्तनाभ्यां सहेति सकुचं यथा स्यात्तथा, मग्ना स्तनपर्य्यन्तं मग्ने त्यर्थः, अतएव अनुद्विग्ने न लज्जोद्वेगा-भावेन नग्ना विवस्त्रा, कापि रमणी, कटितटात् परिमुक्तं प्रच्यावितम्, दुकूलं वस्त्रम्, चालयन्ती सती, वातनुन्ने वायुचालिते, जलस्य प्रवाहे, बहुनीचमत्यन्ताधोदेशम्, गतवति सति, प्रविहृतानि वसनाभावात् प्रकाशितानि निखिलान्यङ्गानि यस्याः सा तादृशी सती, लज्जया, द्राग् झटिति, ममज्ज जानुयुगलकौटिल्यकरणेन जले मग्ना बभूव ।

अत्र स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

सकुचमग्ने ति "स्तोकनम्रा स्तनाभ्याम्" इत्यादिवत् द्वितीयातत्-पुरुषसमास एव । उद्विग्ने ति भावे क्तप्रत्ययान्तं पदम् ॥२८॥

**বাঙ্গালা**—কোন তরুণী দেহটীকে কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া নিরুদ্বেগে নগ্ন হইয়া কটিদেশ হইতে স্খলিত বস্ত্রখানি প্রক্ষালন করিতে

तरलशिशुनिकायः पूर्वकायं निमज्य
जलमविरतधारं पञ्चपान् संसिषेच ।
कथमपि लघुरेकस्तत्र तीरं ततार
करपिहितदृशोऽन्ये न्यश्वसन् सिक्तशीर्षाः ॥२९॥

ছিল ; এমন সময়ে জলের প্রবাহ বায়ু চালিত হইয়া অত্যন্ত নীচে চলিয়া গেল, তখন তাহার সমস্ত অঙ্গ বাহির হইয়া পড়িল ; সুতরাং তৎক্ষণাৎ সে লজ্জায় নম্র হইল ॥২৮।

**अन्वयः**—तरलशिशुनिकायः पूर्वकायं निमज्य पञ्चपान् (प्रति) जलं अविरतधारं संसिषेच, तत्र एकः लघुः (सन्) कथं अपि तीरं ततार, अन्ये करपिहितदृशः सिक्तशीर्षाः च (सन्तः) न्यश्वसन् ॥२९॥

तरलेति । तरलश्चञ्चलस्वभावश्चासौ शिशुनिकायो बालकसमूहश्चेति सः, पूर्वकायं देहोपरिभागपर्यन्तम्, निमज्य जले मज्जयित्वा, पञ्च वा षड् वा परिमाणमेषामिति पञ्चपाः शिशवस्तान् प्रति, जलम्, अविरता अविच्छिन्ना धारा यस्मिन् कर्मणि तद्यथा तथा, संसिषेच, तरलतया चाञ्चल्यादेवेति भावः । तत्र तेषु सिच्यमानेषु शिशुषु मध्ये, एकः शिशुः, लघुः सत्वरः सन्, कथमपि कष्टेन, तीरं नद्यास्तटम्, ततार उत्प्लुत्य जगाम ; अन्ये सिच्यमानाः शिशवस्तु, करैर्हस्तैः पिहिता आवृता दृशो नयनानि यैस्ते, सिक्तानि जलार्द्राणि शीर्षाणि शिरांसि येषां ते तादृशाश्च सन्तः, न्यश्वसन् निश्वासान् अमुञ्चन् ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

पञ्चपानिति "संख्याया अवद्योरन्त्यस्वरादिलोपश्च" इति अप्प्रत्ययः, षष्शब्दस्यान्त्यस्वरादिलोपश्च ॥२९॥

विदधदपि जयं यत्तत्र कश्चिद्विपश्चित्
युवतिजनमपश्यन्नालसः सोऽस्य दोषः ।
हरति हि नवनारी कौमुदी पद्मिनी च
नयनमवहितानामप्यकस्मात् स्वभावात् ॥२०॥

---

**বাঙ্গালা**—চঞ্চলমতি বালকগণ কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া অপর পাঁচ ছয়টী বালকের দিকে অবিচ্ছিন্নধারায় জল সেচন করিতেছিল ; তখন তাহাদের মধ্যে একটী বালক কোন প্রকারে শ্বসন যাইয়া তীরে উঠিল এবং অপর বালকগুলি হাত দিয়া চোখ চাপিয়া ধরিয়া জলাপ্লুত মস্তক হইয়া হাঁপাইতে লাগিল ॥২৯॥

**अन्वयः**—तत्र कश्चित् विपश्चित् जयं विदधत् (सन्) अपि यत् युवतिजनं अपश्यत् सः अस्य अलसः (अपि) दोषः न । हि नवनारी कौमुदी पद्मिनी च स्वभावात् (एव) अकस्मात् अवहितानां अपि नयनं हरति ॥२०॥

विदधदिति । तत्र तदानीम्, कश्चित्, विशेषेण सर्वविषयात् चिनोति ज्ञानं संगृह्णातीति विपश्चित् विद्वान् जनः, जयं विदधत् कुर्वन् सन्नपि, यत्, युवतिजनमपश्यत्; सः, अस्य विपश्चितः, अलसः लोकोऽपि, न दोषः। हि तथाहि, नवनारी, कौमुदी ज्योत्स्ना पद्मिनी च, स्वभावादेव, अकस्मात् अतर्कितमावात्, अवहितानां विषयान्तरनिविष्टचित्तानां जनानामपि, नयनं हरति। नवनार्यस्तु तदानीं स्वभावादेव तस्य नयनं हरन्ति स्म, न पुनः सकाममस्य दर्शनमिति न दोष इति भावः।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा नवनारी प्रस्तुता कौमुदीपद्मिन्यौ चामस्तुते

अदिशदुदितवृद्धा काशनीकाशकेशा
निजयुवतिचरित्रं विस्मरन्ती विचित्रम्।
चल चपलमगारं किन्नु जल्पैरनल्पैः
वृणु च चलनिचोलं पूरुषाः सञ्चरन्ति ॥३१॥

---

तासाञ्च हरतीत्येकया क्रिययाभिसम्बन्धाद्दीपकस्थानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते ॥३०॥

বাঙ্গালা—তৎকালে কোন বিদ্বান্ লোক জপ করিতে থাকিয়াও যে যুবতিগণের প্রতি দৃষ্টিপাত করিতেছিলেন, তাহা তাঁহার অল্পদোষও নহে। কারণ, নবীন রমণী, জ্যোৎস্না এবং পদ্মিনী—এইগুলি স্বভাবতই অতর্কিতভাবে বিষয়ান্তরাভিনিবিষ্ট লোকদিগেরও দৃষ্টি হরণ করিয়া থাকে ॥৩০॥

अन्वयः—काशनीकाशकेशा उदितवृद्धा विचित्रं निजयुवतिचरित्रं विस्मरन्ती (सती इव) अदिशत्। अनल्पैः जल्पैः किं नु चपलं, अगारं चल, चलनिचोलं च वृणु, पूरुषाः सञ्चरन्ति ॥३१॥

अदिशदिति। काशैः काशकुसुमैः नीकाशास्तुल्याः पक्वतया सर्वथा शुभ्रवर्णाः केशाः यस्याः सा, उदिता तदानीमुपस्थिता चासौ वृद्धा चेति सा, विचित्रम्, निजं स्वकीयं यत् युवतिचरित्रं तरुणीसमयस्वभावः तत्, विस्मरन्ती सतीव, एतेनास्या अपि यौवने ईदृशमेव चरित्रमासीदिति सूचितम्; अदिशत् तत्रत्यां काञ्चित् युवतिम् आदिष्टवती। किमादिशदित्याह चलेति। अनल्पैर्बहुभिः, जल्पैरनावश्यकवाक्यैः, किं नु फलं भवेत्, अपि तु किमपि नेत्यर्थः। चपलं शीघ्रम्, अगारं गृहम्, चल आगच्छ; चलनिचोलस्य वायुना चञ्चलीभूतं वस्त्रञ्च, वृणु यथास्थानमारोपय। कुत एतदित्याह पूरुषा इति। पूरुषाः पुरुषाः,

इति विगुणवचोभिर्यौवतं तद्विरक्तं
सजलकलसकक्षं सुष्ठु जोषं जगाम ।
निरगमदथ तासामार्द्रचेलाम्बरालात्
विरलजलदलेपाच्छीतरश्मेरिव श्रीः ॥३२॥

'सञ्चरन्ति तीरपथेन व्रजन्ति। अन्यथा ते तवेतामवस्थामवलोक्य त्वां
निर्लज्जामिव मन्येरन्निति भावः।

अत्र चलनिचोलसंवरणं प्रति पुरुषाः सञ्चरन्तीति वाक्यार्थो हेतुरिति
वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, काशनीकाशकेशीति लुप्तोपमा,
विसरन्तीवेति प्रतीयमाना क्रियोत्प्रेक्षा इत्यनुप्रासच्छेकानुप्रासश्चेत्येतेषा
मिथो निरपेक्षतया संसृष्टिः।

"पूरुषाः पुरुषाः नरः" इत्यमरः ॥३१॥

বাঙ্গালা—এই সময় কাশপুষ্পের ন্যায় অত্যন্তশুভ্রবর্ণ কেশযুক্ত
কোন বৃদ্ধ স্ত্রীলোক আসিয়া নিজের বিচিত্র যৌবনকালচরিত্র বিস্মৃত
হইয়াই যেন কোনও যুবতিকে আদেশ করিল—'অনাবশ্যক কতকগুলি
কথা বলিবার প্রয়োজন কি? সত্বর বাড়ী চল এবং চঞ্চল বস্ত্র সংবরণ
কর, পুরুষেরা বিচরণ করিতেছে' ॥৩১॥

অন্বয়.—তৎ যৌবতং ইতি বিগুণবচোভিঃ বিরক্তং (সৎ) সজলকলসকক্ষং
জোষং সুষ্ঠু (যথা) জগাম। অথ শীতরশ্মেঃ শ্রীঃ বিরলজলদলেপাৎ ইব তাসাং শ্রীঃ
আর্দ্রচেলাম্বরালাৎ নিরগমৎ ॥৩২॥

इतीति। तत्, युवतीनां समूहमिति यौवतम्, इति इत्थम्, विगुण-
वचोभिः वृद्धायाः प्रतिकूलवाक्यैः, विरक्तं सत्, सजला जलपूर्णाः कलशाः
कक्षेषु यस्मिन् कर्मणि तद्यथा तथा, जोषं मौनम्, सुष्ठु सुन्दरम्,
गृहं प्रति जगाम। अथ शीतरश्मेश्चन्द्रस्य, श्रीः कान्तिः, विरलैः स्वल्पैः

हीनजातिवनिताकुलं क्वचित्
रैत्यभूषणविभूषिताङ्गकम् ।
तारकाभिरुपशोभिताम्बर-
श्रीयुतं पुलिनसैकतेऽद्य तत् ॥३३॥

---

जलदैर्मेघैर्यो लिप आवरणं तस्मादिव, तासां युवतीनाम्, श्रीः कान्तिः, आर्द्राणां चेलानां वस्त्राणामन्तरालात्, निरगमत् निर्गताभूत् ।

अत्र श्रौतोपमालङ्कारः ।

"यौवतं गणे" इत्यमरः ॥३२॥

বাঙ্গালা—সেই যুবতিগণ বৃদ্ধার এইরূপ প্রতিকূল বাক্যে বিরক্ত হইয়া জলপূর্ণ কুম্ভ সকল কক্ষে লইয়া নীরব ও মন্থরভাবে গৃহের দিকে গমন করিতে লাগিল। তাহার পর অল্প অল্প মেঘের আবরণ হইতে চন্দ্রের জ্যোৎস্নার ন্যায় আর্দ্র বস্ত্রের ভিতর হইতে তাহাদের দেহকান্তি নির্গত হইতে থাকিল ।৩২।

अन्वयः—क्वचित् रैत्य-भूषण-विभूषिताङ्गकं (अतएव) तारकाभिः उपशोभिताम्बरश्रीयुतं हीनजातिवनिताकुलं पुलिनसैकते अद्य तत् ॥३३॥

रैत्येति। क्वचित् नद्याः कुत्रचित् प्रदेशे, रैत्यभूषणैः पित्तल-मयालङ्कारैर्विभूषितानि अङ्गानि यस्य तत्, अतएव तारकाभिर्नक्ष-त्रैरुपशोभितं यदम्बरं गगनं तस्य श्रीरिव श्रीर्धवलवर्णकान्तिस्तया युतम्, हीनजातिवनिताकुलं चण्डालादिस्त्रीसमूहः, पुलिनसैकते तोयोत्थित-वालुकामयस्थाने, अद्य तत् प्रकाशते स्म ।

अत्र समासगतोपमालङ्कारः ।

"रीतिः स्त्रियामारकूटो न स्त्रियाम्" इत्यमरः ।

वाद्वीजमपि वीजवर्जितं
रोपयन्त्यपसदाङ्गना क्वचित् ।
धुन्वती क्वणितकङ्कणं करं
सन्ततर्ज परुषाक्षरापराम् ॥३४॥

---

टीका: कर्म्मयोमानीवेति "यश्च प्रकीर्त्तितः" इति प्रकीर्त्तित-ग्रहणात् कर्म्मार्थे इदमर्थे वा यत् ॥३३॥

বাঙ্গালা—পিত্তলময় অলঙ্কারে অলঙ্কৃত; সুতরাং নক্ষত্রশোভিত আকাশের ন্যায় ঘোর কৃষ্ণবর্ণ নিম্নজাতীয় স্ত্রীগণ নদীর বালুকাময় পুলিনে প্রকাশ পাইতেছিল ।৩৩।

अन्वय:—क्वचित् अपसदाङ्गना वीजवर्जितं अपि वाद्वीजं रोपयन्ती क्वणित-कङ्कणं करं धुन्वती परुषाक्षरा (च सती) अपरां सन्ततर्ज ॥३४॥

वाद्विति । क्वचित्, अपसदाङ्गना काचित् हीनजातिस्त्री, वीज-वर्जितं कारणहीनमपि, वाद्वीजं विवादमूलम्, रोपयन्ती प्रवर्त्तयन्ती, क्वणितानि शब्दायमानानि कङ्कणानि हस्तभूषणविशेषा यत्र तं तादृशम्, करं हस्तम्, धुन्वती सञ्चालयन्ती, परुषाणि निष्ठुराणि अक्षराणि वाक्यवर्णा यस्याः सा तादृशी च सती, अपरामपसदाङ्गनाम्, सन्ततर्ज भर्त्सयामास ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ॥३४॥

বাঙ্গালা—কোন স্থানে কোন নীচজাতীয় স্ত্রী বিনা কারণে বিবাদের বীজ রোপণ করিয়া শব্দায়মান কঙ্কণযুক্ত হস্ত কম্পিত করিতে থাকিয়া নিষ্ঠুর বাক্যে অপর কোন নীচজাতীয় স্ত্রীলোককে ভর্ৎসনা করিতেছিল ।৩৪।

दुःसहश्रमविपन्नविग्रहान्
मुक्तिमात्रपतितान् सरिज्जले ।
मीलिताक्षमचलानसिस्नपन्
पुङ्गवान् कृषकपुङ्गवाः क्वचित् ॥२५॥
स्नानलब्धगुरुशान्तिनामुना
सुस्थतामचिरजां व्रजन्नताम् ।
कोटिना तटमखानि शृङ्गयोः
नान्त्रि तिष्ठति पयोऽपि भद्रता ॥२६॥

---

अन्वयः—क्वचित् कृषकपुङ्गवाः दुःसह-श्रम-विपन्न-विग्रहान् सरिज्जले मुक्तिमात्रपतितान् अचलान् पुङ्गवान् मीलिताक्षं असिस्नपन् ॥२५॥

दुःसहेति । क्वचित्, कृषकपुङ्गवाः कृषीवलश्रेष्ठाः, हलशकटवहनादिना दुःसहेन श्रमेण विपन्ना अवसन्ना विग्रहाः शरीराणि येषां तान्, सरितो नद्या जले, मुक्तिमात्रं बन्धमोचनमात्र एव पतितान् मग्नान्, अचलान् स्पन्दनरहितान्, पुमांसश्च ते गावश्चेति पुङ्गवास्तान् वृषान्, मीलितानि तैः पुङ्गवैरेव मुद्रितानि अक्षीणि चक्षूंषि यस्मिन् कर्मणि तद्यथा तथा, असिस्नपन् स्नपितवन्तः ।

अत्र स्वभावोक्तिरलङ्कारः, छेकानुप्रासयमकयोः संसृष्टिः ॥२५॥

বাঙ্গালা—বহু সময় হল ও শকটপ্রভৃতি বহন করায় বৃষগুলির শরীর অবসন্ন হইয়া পড়িয়াছিল; সুতরাং কৃষকেরা নদীর কোন স্থানে যেই তাহাদিগকে ছাড়িয়া দিল, অমনি সেগুলি যাইয়া নদীর জলে পড়িল, পরে স্থির হইয়া দাঁড়াইল এবং চোখ বুজিয়া থাকিল; তখন কৃষকেরা সেগুলিকে স্নান করাইতে লাগিল ॥২৫॥

ऊर्द्धदण्डधृतवातवाससि
सन्ततेऽनुगुणमातरिश्वना ।
केनिपातमवलम्ब्य सुस्थितः
नाविको मुदितचञ्चुरुज्जगौ ॥३०॥

अन्वयः—स्नानलब्धगुरुशान्तिना अमुना अचिरजां अपि जनयता मुञ्चता (सता) शृङ्गयोः कोटिना तटं चखानि । पशोः भद्रता नाम्नि हि तिष्ठति ॥२९॥

स्नानेति । स्नानेन लब्धा गुर्वी महती शान्तिर्येन तेन तथोक्तेन, अमुना पुङ्गवेन, अचिरजाम् अनधिकपूर्वजातामपि, जनयता स्नानलब्ध-शान्तिरूपकृतोपकारस्मरणम्, मुञ्चता त्यजता सता, पुनरपि जपना-वश्यकतया कृतकपरिश्रमावश्यम्भावादिति भावः । शृङ्गयोः कोटिना अग्रभागेण, तटं नदीतीरम्, चखानि विदारितम् । अतएव पशोः पशुजातीयस्य तस्य पुङ्गवस्य, भद्रता भद्र इत्यानुपूर्वीमत्त्वम्, नाम्नि हि संज्ञायामेव, तिष्ठति ; कार्य्ये तु भद्रता साधुता नेत्यर्थः । स्नाना-नन्तरमेव तटखननरूपाभद्रकार्य्यकरणात् । "उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः" इत्यमरोक्तश्चेति भावः ।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, नाम्नि हि भद्रता तिष्ठति, अन्यत्र तु नेत्यन्यव्यपोहनादार्थी परिसंख्या चानयो-रेकाश्रयानुप्रवेशरूपः सङ्करः ॥२९॥

বাঙ্গালা—কোন বৃষ স্নান করায় গুরুতর শান্তি লাভ করিয়া অচিরজাত কৃতজ্ঞতা পরিত্যাগপূর্ব্বক শৃঙ্গাগ্রদ্বারা নদীর তীর খনন করিতে লাগিল। কারণ, সে পশুর ভদ্রতা কেবল নামেই থাকে ॥২৯॥

अन्वयः—ऊर्द्धदण्डधृतवातवाससि अनुगुणमातरिश्वना सन्तते (सति) नाविकः केनिपातमवलम्ब्य सुस्थितः मुदितचञ्चुः (च सन्) उज्जगौ ॥३०॥

प्रातिकूल्यमुदके प्रधावति
कर्णधारनिकरो गुरुश्रमात्।
निक्षिपन् मुहुररित्रसन्ततिं
निश्वसन् स्तरिमतीतरच्छनैः ॥३८॥

ऊर्द्ध्वेति। ऊर्द्ध्वदण्डेन उच्चस्तम्भेन धृतं यत् वातवासो वायुवस्त्रं तस्मिन्, अनुगुणमातरिश्वना अनुकूलवायुना, सन्तते प्रसारिते सति, तथाभूतेन वायुनैव नौकायां चालितायां सत्यामित्यर्थः। नाविकः कर्णधारः, केनिपातं जलप्रवेशितपृष्ठवर्त्तिहस्तदण्डमिति तात्पर्य्यम्, अवलम्ब्य वामबाहुना कक्षमूले धृत्वा, सुस्थितः अचलभावेनावस्थितः, मुद्रितचक्षुर्निमीलितनयनश्च सन्, उच्चकैः उच्चस्वरेण गानं चकार।

अत्र स्वभावोक्तिरलङ्कारः।

"श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इति "अरित्रं केनिपातकः" इति चामरः ॥३७॥

বাঙ্গালা—অনুকূল বাতাস আসিয়া মাস্তলের পালের কাপড় ছড়াইয়া দিয়া নৌকা চালাইতে লাগিলে, নৌকার মাঝি হালের গুঁটী ধরিয়া স্থিরভাবে থাকিয়া চোখ বুজিয়া উচ্চৈঃস্বরে গান করিতেছিল ॥৩৭॥

अन्वयः—उदके प्रातिकूल्यं प्रधावति (सति) कर्णधारनिकरः गुरुश्रमात् अरित्रसन्ततिं मुहुः निक्षिपन् निश्वसन् (च सन्) शनैः तरिं अतीतरत् ॥३८॥

प्रातिकूल्यमिति। उदके नदीजले, प्रातिकूल्यमाश्रित्य प्रतिकूलभावेनेत्यर्थः, प्रधावति वेगेन चलति सति, कर्णधारनिकराः नाविकसमूहः, गुरुश्रमादतीवायासात्, अरित्रसन्ततिं केनिपातश्रेणिम्, मुहुर्वारं

तिष्ठ मामपि नयेतिभाषिणः
विप्रकृष्टपथिकस्य धावतः ।
कोऽपि पारतरणिं प्रवाहयन्
अन्यतीरतरणाय तत्वरे ॥३९॥

---

पारम्, अतिं निश्चिपन्, गुणश्रमादेव निःश्वसंश्च सन्, शनैः शनैः मन्दम्, तरिं विशालां नौकाम्, अतीतरत् तारितवान् ।

अत्रापि स्वभावोक्तिच्छेकानुप्रासयोः संसृष्टिः ॥३८॥

বাঙ্গালা—নদীর জল প্রতিকূলভাবে বেগে চলিতে লাগিলে, নাবিকেরা অত্যন্ত পরিশ্রমসহকারে অরিত্র সকল ( দাঁড়গুলি ) মুহুর্মুহু জলে নিক্ষেপ করিতে থাকিয়া, অনবরত নিশ্বাস ত্যাগ করতঃ ধীরে ধীরে বৃহৎ নৌকা চালাইতেছিল ॥৩৮॥

अन्वयः—तिष्ठ मां अपि नय इति भाषिणः धावतः विप्रकृष्टपथिकस्य कः अपि पारतरणिं प्रवाहयन् अन्यतीरतरणाय तत्वरे ॥३९॥

तिष्ठेति । हे नाविक ! तिष्ठ, मामपि स्वनौकां नय इति भाषिणः, धावतः वेगेनागच्छतः, विप्रकृष्टो दूरवर्ती चासौ पथिकश्चेति तस्य तमनादृत्येत्यर्थः । अनादरे षष्ठी । कोऽपि नाविकः, पारतरणिम् उभयतीरगमनागमननौकाम्, प्रवाहयन् चालयन्, अन्यतीरे तरणाय गमनाय, तत्वरे त्वरां कृतवान् ।

अत्र स्वभावोक्तिच्छेकानुप्रासयोः संसृष्टिरलङ्कारः ।

तत्वर इति "त्वर तरणे" इति त्वरधातोः परोक्षायां प्रयोगः ॥३९॥

বাঙ্গালা—'নাবিক ! দাঁড়াও, আমাকেও লও' এই কথা বলিয়া কোন দূরবর্ত্তী পথিক ছুটিয়া আসিতে লাগিলে, কোন নাবিক তাহাকে

श्राम्यताभिमतदेशकाम्यता
तापितेन तरणेर्महातपैः।
केनचित्तटतरोस्तले क्षणं
बध्नता स्वतरणिं विशश्रमे ॥४०॥
प्रतिकूलगामिनि सवेगवारिणि
गुरुणा गुणेन तरणिं प्रतीरगाः।
परिकृष्य पान्थजनाः परिश्रमात्
गुणकर्त्तनेन सहसाऽपतन् भुवि ॥४१॥

---

অগ্রাহ্য করিয়া পরের নৌকা বাহিতে থাকিয়া, অন্য তীরে যাইবার জন্য ত্বরা করিতেছিল ॥৩৯॥

अन्वयः—अभिमतदेशकाम्यता तरणेः महातपैः तापितेन श्राम्यता (च) केनचित् तटतरोः तले क्षणं स्वतरणिं बध्नता (सता) विशश्रमे ॥४०॥

श्राम्यतेति। अभिमतं देशं गन्तुमिच्छतीति अभिमतदेशकाम्यता, तरणेः मध्याह्नसूर्य्यस्य, महातपैस्तीव्रघर्मैः, तापितेन, श्राम्यता दीर्घकाल-तरीवाहनात् परिश्रमं प्राप्नुवता च, केनचिन्नाविकेन, तटतरोस्तीरस्थ-वृक्षस्य, तले अधोदेशे, क्षणं कियन्तं कालम्, स्वतरणिं निजक्षुद्रनौकाम्, बध्नता सता, विशश्रमे विश्रान्तं विश्रामं क्रियते स्म इत्यर्थः।

अत्र छेकानुप्रासोऽलङ्कारः।

अभिमतं देशमिच्छतीति वाक्ये "काम्यच्" इति काम्यप्रत्ययः। विशश्रमे इति श्रमधातोर्भावे परोक्षा ॥४०॥

বাঙ্গালা—অভিমতদেশগামী, পরিশ্রান্ত এবং মধ্যাহ্নসূর্য্যের গুরুতর তাপে সন্তপ্ত কোন নাবিক তীরস্থ কোন বৃক্ষের তলে নিজের নৌকা বন্ধন করিয়া কিছুকাল বিশ্রাম করিতেছিল ॥৪০॥

बहुकष्टपच्यफललाभलोभिनः
चिरकर्षणोपचितघर्मबिन्दवः ।
रवितापतप्ततनवः कृषीवलाः
प्रतिशीतले तरुतले विशश्रमुः ॥४२॥

---

अन्वयः—प्रतीरगाः पञ्चषजनाः परिश्रमात् गुरुणा गुणेन प्रतिकूलगामिनि सवेगवारिणि तरणिं परिकृष्य सहसा गुणकर्त्तनेन भुवि अपतन् ॥४१॥

प्रतिकूलेति । प्रतीरगा नद्यास्तीरगताः, पञ्च वा षड् वा परिमाणमेषामिति पञ्चषाश्च ते जनाश्चेति ते पञ्चषजनाः, परिश्रमात्, गुरुणा महता, गुणेन रज्ज्वा प्रतिकूलगामिनि, वेगेन सहेति सवेगं यद्वारि नद्या जलं तस्मिन्, तरणिं विशालां नौकाम्, परिकृष्य आकृष्याकृष्य, सहसा, गुणस्य तदाकर्षरज्ज्वोः कर्त्तनेन छेदनेन, भुवि अपतन् । वेगसंवत्वस्याप्रकृत्यादिभ्यामयः ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

"कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः ।

अत्रापि पञ्चषेति "संख्यायाः—" इत्यादिना अच् अन्त्यस्वरादिलोपश्च ।

इतःप्रभृत्यष्टसु श्लोकेषु मञ्जुभाषिणी नाम वृत्तम्—"स-ज-सा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥४१॥

বাঙ্গালা—তীরবর্ত্তী পাঁচ ছয় জন লোক মহাকষ্টে বিশাল গুণ টানিয়া বেগবান্ উজান জলে নৌকা লইয়া যাইতেছিল, হঠাৎ গুণ ছিঁড়িয়া যাওয়ায় তাহারা ভূতলে পড়িয়া গেল ।৪১।

अन्वयः—बहुकष्टपच्यफललाभलोभिनः कृषीवलाः चिरकर्षणोपचितघर्मबिन्दवः रवितापतप्ततनवः (च सन्तः) प्रतिशीतले तरुतले विशश्रमुः ॥४२॥

बह्विति । बहूनि कष्टे हलादिना कृतकर्षणे भूमिभागे पच्यन्त

घनकाननान्तरगतो गवां गणः
प्रथमप्रभुक्तयवसान् समुद्गिरन् ।
परिचालयन् हनुमनुक्षणं शनैः
अभिचर्व्य सर्वमुदरं न्यवीविशत् ॥४४॥

---

उन्मीलिततया प्रकाशिते ईक्षणे चक्षुषी यस्य स ताहशश्च सन्, चलिता निश्वासेनैव कम्पिता अङ्गानां संहतिः समूहो यस्मिन् कर्म्मणि तद्यथा तथा, रसनां जिह्वाम्, विपुलमधिकम्, वितत्य विस्तार्य्य, सन्नपसीत् छायायां स्थित्वा निरन्तरं श्वासमाविष्कृतवान् ।

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासेन संसृज्यते ॥४३॥

বাঙ্গালা—কুকুরগুলি সূর্য্যের গুরুতর তাপে তাপিত হইয়া কোন ছায়ায় অর্দ্ধশয়িত থাকিয়া, মুখ বিকৃত করিয়া, চোখ মেলিয়া, জিহ্বাটাকে অধিক বাড়াইয়া এবং সমস্ত অঙ্গ কাঁপাইয়া শ্বাস ত্যাগ করিতেছিল ॥৪৩॥

अन्वयः—गवां गणः घनकाननान्तरगतः शनैः अनुक्षणं हनुं परिचालयन् प्रथमप्रभुक्तयवसान् समुद्गिरन् ( च सन् ) अभिचर्व्य उदरं सर्वं न्यवीविशत् ॥४४॥

घनेति । गवां गणः, घनं निविडं यत् काननं वनं तस्यान्तरं मध्यं गतः, तत्रत्यच्छायायामवस्थित इत्यर्थः, शनैर्मन्दं मन्दम्, अनुक्षणं निरन्तरम्, हनुं गण्डावयवम्, परिचालयन् चर्वणार्थं सञ्चालयन्, प्रथममादौ प्रभुक्ता उदराभ्यन्तरे प्रवेशिता ये यवसा घासास्तान्, समुद्गिरन् उदरान्मुखाभ्यन्तरे आनयंश्च सन्, अभिचर्व्य सर्वतोभावेन तच्चर्वणं कृत्वा, उदरे, सर्वम्, न्यवीविशत् प्रवेशितवान् ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ।

"घासो यवसम्" इत्यमरः । "यवसः पुंसि च" इति तत्रत्यटीकायां रघुनाथः । "गण्डौ कपोलौ तत्परा हनुः" इति चामरः ॥४४॥

পথিকো বৃহৎপথগমশ্রমাকুলঃ
পরিপীয় বারি নিবসন্ননাতপে।
শিশিরানিলোপজনিতাঙ্গনির্বৃতিঃ
বিবশো বভূব ভুবি নিদ্রিতো দ্রুতম্ ॥৪৫॥
রবিরশ্মিশুষ্করসশাদ্বলার্জ্জনীং
বিনিধায় মূর্দ্ধনি কপীশ্বরাঃ খলে।
সততস্রুতপ্রস্রুতঘর্ম্মবিন্দবঃ
ফলিতাষ্টভূমিগর্ব্বং ব্যপানয়ন্ ॥৪৬॥

---

বাঙ্গালা—গোসমূহ নিবিড় বনের ভিতরে থাকিয়া ধীরে ধীরে অনবরত গণ্ডযুগল সঞ্চালন করিয়া প্রথমভুক্ত ঘাস মুখে আনিয়া পুনর্ব্বার চিবাইয়া সে সমস্তই উদরের ভিতরে প্রবেশ করাইতেছিল ॥৪৪॥

অন্বয়ঃ—বৃহৎপথগমশ্রমাকুলঃ পথিকঃ বারি পরিপীয় অনাতপে নিবসন্ শিশিরানিলোপজনিতাঙ্গনির্বৃতিঃ বিবশঃ (স সন্) দ্রুতং ভুবি নিদ্রিতঃ বভূব ॥৪৫॥

পথিক ইতি। বৃহতো দীর্ঘস্য পথো গমনেন গমনেন যঃ শ্রমস্তেন আকুলঃ পথিকঃ, বারি জলং পরিপীয়, অনাতপে ছায়ায়াম্, নিবসন্নবতিষ্ঠমানঃ, শিশিরেণ শীতলেন অনিলেন বায়ুনা উপজনিতা অঙ্গানাং নির্বৃতিঃ শান্তির্যস্য স তথোক্তঃ, বিবশো নিদ্রাগমাদস্বাধীনচেষ্টশ্চ সন্, দ্রুতম্, ভুবি, নিদ্রিতো বভূব।

অত্রাপি স্বভাবোক্তিরলঙ্কারশ্ছেকানুপ্রাসেন সংসৃষ্টঃ ॥৪৫॥

বাঙ্গালা—সুদীর্ঘ পথ গমন করায় পরিশ্রান্ত পথিকগণ নদীর জল পান করিয়া বৃক্ষের ছায়ায় বসিয়া বিশ্রাম করিতেছিল; এমন সময় শীতল বায়ু আসিয়া তাহাদের অঙ্গের শান্তি জন্মাইতে লাগিল বলিয়া, তাহারা অবশ হইয়া সত্বরই ভূতলে নিদ্রিত হইয়া পড়িতেছিল ॥৪৫॥

प्रथमाद्दिनस्य पथिकः पथि व्रजन्
प्रयियासितस्थलसमीपगोऽपि सन् ।
गमनीयमल्पमपि मार्गमुन्मनाः
बुबुधे प्रभूतमिव दुःसहश्रमी ॥४७॥

---

अन्वयः—कृषीवलाः मूर्द्धनि रवि-रश्मि-शुष्क-रक्त-गात्रमार्जनीं विनिधाय सतत-स्रुत-प्रसृत-घर्म्मबिन्दवः (सन्तः) खली हलिकृष्टभूमिग-तृणं व्यपानयन् ॥४६॥

रवीति । कृषीवलाः कृषकाः, मूर्द्धनि मस्तके, रविरश्मिभिः सूर्य्यकिरणैः शुष्का रक्ता अञ्चलानि यस्याः सा चासौ गात्रमार्जनी चेति ताम्, विनिधाय बन्धनेन संस्थाप्य, सततं स्रुताः निर्गताः प्रसृताः विस्तृताश्च घर्म्मबिन्दवो येषां ते तादृशाः सन्तः, खली प्रसङ्गेन, हलिभिः कृष्टा या भूमिः तत्र गच्छति तिष्ठतीति तत्तादृशं यत्तृणं तत्, व्यपानयन् उत्तोल्योत्तोल्यापनीतवन्तः ।

अत्रापि स्वभावोक्तिरलङ्कारः ।

"खलं शस्यस्थाने शठे त्रिषु" इति त्रिकाण्डशेषः ॥४६॥

বাঙ্গালা—কৃষকেরা মস্তকে সূর্য্যকিরণশুষ্ক গাত্রমার্জনী বন্ধন করিয়া হলকৃষ্ট ভূমিজাত তৃণ সকল তুলিয়া ফেলাইতেছিল, সেই সময়ে তাহাদের গাত্র হইতে অনবরত ঘর্ম্মবিন্দু নির্গত হইয়া বিস্তৃতভাবে নিঃসৃত হইতেছিল ॥৪৬॥

अन्वयः—पथिकः दिनस्य प्रथमात् पथि व्रजन् प्रयियासित स्थल समीपगः अपि दुःसहश्रमी उन्मनाः (च) सन् गमनीयं अल्पं अपि मार्गं प्रभूतं इव बुबुधे ॥४७॥

प्रथमादिति । पथिकः, दिनस्य, प्रथमात् प्रभातकालादवधि, पथि व्रजन् गच्छन्, प्रयातुमिष्टं प्रयियासितं यत् स्थलं तस्य समीपं गच्छतीति सः, तादृशः सन्नपि, दुःसहः श्रमोऽस्यास्तीति स दुःसहश्रमी उन्मना

ललितामला मृदुलपल्लवावली
प्रथमप्रकाशितमुखी नवा सती।
प्रखरेण भास्करकरेण धर्षिता
प्रमुमोह साहसिकतावहिर्गमात् ॥४८॥

उत्सुकचित्तश्च सन्, गमनीयम्, अल्पमपि मार्गं पन्थानम्, प्रभूतं प्रचुरमिव, बुबुधे मेने। दुःसहश्रमीत्यादेरित्यन्वयः।

अत्र अल्पस्य पथः प्राचुर्य्यबोधं प्रति दुःसहश्रमिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

दुःसहश्रमीति अतिशयार्थे मत्वर्थीय इन्। अतएव बहुव्रीहिणा तदर्थस्य बोधयितुमशक्यत्वात् "न कर्म्मधारयान्मत्वर्थीयः—" इत्यादि-निषेधस्य न प्रसक्तिरिति मन्तव्यम् ॥४७॥

বাঙ্গালা—পথিকগণ দিনের প্রথম সময় হইতে পথে চলিতে থাকিয়া গন্তব্যস্থানের নিকটবর্ত্তী এবং উৎকণ্ঠিত হইয়াও অত্যন্ত পরিশ্রান্ত বলিয়া অল্প পথকেও অধিক বলিয়া মনে করিতেছিল ॥৪৭॥

अन्वयः—ललिता अमला नवा (च) मृदुलपल्लवावली साहसिकतावहिर्गमात् प्रथमप्रकाशितमुखी प्रखरेण भास्करकरेण धर्षिता (च) सती प्रमुमोह ॥४८॥

ललितेति। ललिता सुन्दरी, अमला निर्म्मला, नवा नूतना, च, मृदुला चासौ पल्लवानामावली श्रेणिश्चेति सा मृदुलपल्लवावली तादृशी रमणी च, साहसिकतया अल्पवयसैव साहसेन च वहिर्गमात् तरुलता-शाखाभ्य उत्थानात्, भवनाद्बहिर्गमनाच्च, प्रथमं प्रकाशितं मुख-भागभागो वदनञ्च यया सा तादृशी, अतएव प्रखरेण अतितीक्ष्णेन, भास्करकरेण सूर्य्यकिरणेन, विटहस्तेन च, धर्षिता म्लाना आक्रान्ता च सती, प्रमुमोह अतीवविकला प्रमूर्च्छिता च बभूव।

पादपादपि लताकुलादपि
भूतलादपि च दूरवर्त्तिनः ।
काचवज्जलधिवीचिचञ्चलं
निर्म्मलं किमपि तेज उद्‌गतम् ॥४९॥

शोषयन् रसमशेषवस्तुनः
तापयन् गृहगतान् जनानपि ।
दुःसहो दिनकरोऽकरोत्तदा
चण्डरोचिरिति नाम सार्थकम् ॥५०॥

---

अत्र कार्य्यसाम्येन विशेषणसाम्येन च तादृशपद्मवाक्यर्यां तदयौ-व्यवहारसमारोपात् समासोक्तिरलङ्कारो हृत्यनुप्रासश्चानयोः संसृष्टिः ॥४८॥

বাঙ্গালা—নির্ম্মল, মনোহর, অল্পকালমাত্র নির্গত ও প্রথম প্রকাশিত সুখ উদ্ভুলতার নূতন পল্লবগুলি সূর্য্যের প্রখর কিরণে ম্লান হইয়া ক্রমে অতিবিকল হইতেছিল ॥৪৮॥

अन्वयः—काचवत् जलधिवीचिचञ्चलं निर्म्मलं (च) किं अपि तेजः दूरवर्त्तिनः पादपात् अपि लताकुलात् अपि भूतलात् अपि च उद्‌गतं ॥४९॥

पादपादिति । काचवत् लघुम्, जलधिवीचिवत् समुद्रतरङ्ग इव चञ्चलम्, निर्म्मलञ्च, किमपि तेजः, दूरवर्त्तिनो दूरदूरदेशस्थितात्, पादपाद्‌वृक्षसमूहादपि, लतानां कुलात् निचयादपि, भूतलादपि च, उद्‌गतमुत्थितमभूत् ।

अत्र श्रौतोपमालुप्तोपमयोः परस्परनिरपेक्षतया संसृष्टिः ।

इदन्तु तेजो निदाघकाले मध्याह्नसमये तीव्रातपे नितरामनुसन्धित्-सूनां प्रत्यक्षीभवति ॥४९॥

বাঙ্গালা—কাচের ন্যায় হালকা, জলতরঙ্গের ন্যায় চঞ্চল ও নির্ম্মল, কোন তেজ দূরবর্ত্তী বৃক্ষ, লতা ও ভূতল হইতে উঠিতেছিল ॥৪৯॥

प्रायशस्त्रिजगतामकारणं
दृष्टिमेष मलिनो विलुम्पति ।
इत्यवेत्य किरणै रवि रिरत्
अन्धकारमरुणो गुहान्तरे ॥५१॥

अन्वयः—तदा दुःसहः दिनकरः अशेषवस्तुनः रसं शोषयन् गृहगतान् अपि जनान् तापयन् (च) चण्डरोचिः इति नाम सार्थकं अकरोत् ॥५०॥

शोषयन्निति । तदा दुःसहो दिनकरः सूर्यः, अशेषवस्तुनो रसवतः धान्यादिसर्वपदार्थस्य, रसं शोषयन्, गृहगतानपि जनान् तापयंश्च सन्, चण्डं भीषणं रोचिरातपो यस्य स चण्डरोचिरिति नाम संज्ञाम्, सार्थकं अन्वर्थयुक्तम्, अकरोत् ।

अत्र चण्डरोचिरिति नाम्नः सार्थकीकरणं प्रति प्रथमार्द्धगतपदार्थद्वयस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारस्तच्चानुप्रासेन संसृज्यते ॥५०॥

বাঙ্গালা—তৎকালে দুঃসহ সূর্য্য রসযুক্ত সমস্ত বস্তুর রস শোষণ এবং গৃহস্থিত জনগণেরও সন্তাপ জন্মাইতে থাকিয়া, 'চণ্ডরোচি' এই নাম সার্থক করিতেছিলেন ॥৫০॥

अन्वयः—एषः मलिनः अकारणं प्रायशः (एव) जगतां दृष्टिं विलुम्पति इति अवेत्य इव अरुणः किरणैः अन्धकारं गुहान्तरे ऐरिरत् ॥५१॥

प्रायश इति । एष मलिनः कृष्णवर्णः पापी च, अन्धकारः, अकारणम्, प्रायशो बाहुल्येनैव, जगतां जगद्वासिनां जनानां दृष्टिम्, विलुम्पति स्वभावेन मन्त्रौषधिप्रभावेण च अपहरति; इति अवेत्य ज्ञात्वेव, अरुणः सूर्यो राजा च, किरणैर्मयूखै राजपुरुषैश्च, अन्धकारं तिमिरं चौरञ्च, गुहान्तरे पर्वतकन्दरे कारागारे च, ऐरिरत् प्रेरितवान् ।

भास्वदंशुनिचयैस्तिरस्कृतः
सूर्य्यकान्तमणिरग्निमातनोत् ।
शक्तिमान् जगति को जनो मुधा
संसहेत हि परावमाननाम् ॥५२॥

अत्र कार्य्यसाम्येन सूर्य्ये राज्ञः अन्धकारे च चौरस्य व्यवहार-समारोपात् समासोक्तिरलङ्कारः, क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥५१॥

বাঙ্গালা—এই মলিন অন্ধকার বিনা কারণে প্রায় জগদ্বাসী লোকেরই দৃষ্টি হরণ করে ; ইহা জানিয়াই যেন সূর্য্য আপন কিরণদ্বারা অন্ধকারকে পর্ব্বতের গুহার ভিতরে প্রেরণ করিতেছিলেন ॥৫১॥

अन्वयः—सूर्य्यकान्तमणिः भास्वदंशुनिचयैः तिरस्कृतः (सन्) अग्निं आतनोत् । जगति शक्तिमान् कः हि जनः मुधा परावमाननां संसहेत ॥५२॥

भास्वदिति । सूर्य्यकान्तमणिः, भास्वतः सूर्य्यस्य अंशुनिचयैः किरणसमूहैः, तिरस्कृत आहतो भर्त्सितश्च सन्, अग्निम्, आतनोत् विस्तारयामास अकरोत् । जगति, शक्तिमान् प्रतिक्रियाप्रदर्शने समर्थः, को हि जनः, मुधा वृथा विनाकारणमित्यर्थः, परावमाननां परकृत-मपमानम्, संसहेत, अपि तु कोऽपि नेत्यर्थः ।

अत्रावरणभर्त्सनयोर्भेदेऽपि तिरस्कृत इति पदस्य श्लेषेणाभेदाध्य-वसायादतिशयोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासश्चानयोरङ्गाङ्गिभावेन सङ्करः ।

रविकिरणस्पर्शे सूर्य्यकान्तमणेरग्नेराविर्भावः खलु स्वाभाविकः ॥५२॥

বাঙ্গালা—সূর্য্যকান্তমণি সূর্য্যের কিরণসমূহে আবৃত হইয়া অগ্নি

दीर्णभूविलमुपेत्य भास्करः
ध्वान्तशेषमिव हन्तुमुद्यतः।
नागलोकमगमद्धि नीतिवत्
नाश्रयेच्छमपि नैव शेषयेत् ॥५३॥
तापितं रविकरैश्च सैकतं
तीव्रमुष्णकिरणं समासृजत्।
तीक्ष्णतेजसमुपेत्य यो जड़ः
दुर्भगः स खलु सर्वसम्मतः ॥५४॥

---

আবিষ্কার করিতেছিল। কারণ, জগতে শক্তিশালী কোন্ লোক বিনা কারণে পরকৃত অপমান সহ্য করে? ॥৫২॥

**अन्वयः**—भास्करः दीर्ण-भू-बिलं उपेत्य ध्वान्तशेषं (अपि) हन्तुं उद्यतः इव नागलोकं अगमत्। विपश्चित् नाश्रयलेशं अपि न एव शेषयेत् ॥५३॥

दीर्णेति। भास्करः सूर्यः, दीर्णाया निजकिरणैरेव विदारिताया भुवो भूमेः बिलं गर्त्तम्, उपेत्य प्रविश्य, ध्वान्तस्य अन्धकारस्य शेष-मवशिष्टमंशमपि, हन्तुमुद्यत इव सन्, नागलोकं पातालम्, अगमत् गन्तुमारभते स्म। विपश्चित् नीतिज्ञो लोकः, नाश्रयस्य शत्रोरल्पस्य लेशमल्पमंशमपि, नैव, शेषयेत् अवशिष्टतया रक्षेत्।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चानयोः परस्परनिरपेक्षतया संसृष्टिः ॥५३॥

বাঙ্গালা—সূর্য্য বিদীর্ণ ভূমির গর্ত্তের ভিতরে প্রবেশ করিয়া অবশিষ্ট অন্ধকারও যেন বিনাশ করিতে উদ্যত হইয়া পাতালে যাইতেছিলেন। কারণ, নীতিজ্ঞ লোক শত্রুর লেশও অবশিষ্ট রাখেন না ॥৫৩॥

प्रचण्डमार्त्तण्डमरीचिमण्डलैः
समाहतस्तप्तसमीरणैरपि ।
विगाहमानोऽपि सरोवरान्तरे
न देहदाहं स्म जहाति दन्तुरम् ॥५७॥
प्रभञ्जनो वह्निसमानमर्गनः
धरारजोराजिमुपाहरन् जवात् ।
सनिस्वनं नीरमपर्णमुद्वहन्
उदभ्रमत् सिन्धुजलभ्रमोपमम् ॥५८॥

अन्वयः—प्रचण्ड-मार्त्तण्ड-मरीचि-मण्डलैः तप्तसमीरणैः अपि समाहतः (जनः) सरोवरान्तरे विगाहमानः अपि (सन्) दन्तुरं देहदाहं न जहाति स्म ॥५७॥

प्रचण्डेति । प्रचण्डस्य प्रखरतया नितान्तभीषणस्य मार्त्तण्डस्य सूर्य्यस्य मरीचिमण्डलैः किरणसमूहैः, तप्तसमीरणैरपि तन्मरीचिमण्डलसन्तप्तवायुभिश्च, समाहतस्ताडितः भृशं स्पृष्ट इत्यर्थः, जनः, सरोवरान्तरे उत्तमजलाशयमध्ये विगाहमानो मज्जन्नपि सन्, दन्तुरं विषमं देहदाहं शरीरसन्तापम्, न जहाति स्म सहसा न तत्याज ; तदतिरेकादिति भावः ।

अत्र विगाहनरूपे कारणे सत्यपि देहदाहत्यागरूपतत्कार्य्यानुत्पत्तेर्विशेषोक्तिरलङ्कारः, छेकानुप्रासस्य वृत्त्यनुप्रासस्य चैतेषां संसृष्टिः ।

इतःप्रभृति पञ्चसु श्लोकेषु वंशस्थविलं वृत्तम् ॥५७॥

বাঙ্গালা—প্রচণ্ড সূর্য্যের কিরণ ও সন্তপ্ত বায়ুর সংস্পর্শের পরে মানুষ সরোবরমধ্যে অবগাহন করিতে থাকিয়াও সহসা দেহের দারুণ সন্তাপ ত্যাগ করিতে পারিতেছিল না ॥৫৭॥

कृतक्षणं प्राणपतिं प्रवासिनम्
अवीक्ष्य साक्षाद्युवतेरुपागतम्।
मुहुःसहोऽन्तर्ज्वलितो महातपः
जिगाय मध्यन्दिनभास्वदातपम् ॥५८॥

---

अन्वयः—वह्निसमानमर्शनः प्रभञ्जनः जवात् धरारजोराजिं समाहरन् घनिस्वनं नीरसपर्णं उद्वहन् (च) सिन्धुजलभ्रमोपमं उदभ्रमत् ॥५७॥

प्रभञ्जन इति। वह्निसमानमर्शनः अग्नितुल्यस्पर्शः, प्रभञ्जनो वायुः, जवाद्वेगात्, धरायाः भूमेः रजोराजिं धूलिसमूहम्, समाहरन्नाददानः, घनिस्वनं सशब्दम्, नीरसपर्णं शुष्कपत्रम्, उद्वहन् तोलयंश्च सन्, सिन्धुजलभ्रमः समुद्रजलावर्त्त उपमा यस्य कर्म्मणः इति तद्यथा तथा, उदभ्रमत् घूर्णितवान्।

अत्र स्वभावोक्तिरलङ्कारः, समासगतमार्थीसमाहयत्वेऽयोतैमामङ्गाङ्गि-भावेन सङ्करः, सोऽपि च एककावानुप्रवेशेन संसृज्यते ॥५७॥

বাঙ্গালা—অগ্নির তুল্য উষ্ণস্পর্শ বায়ু বেগে ভূতলের ধূলি লইয়া, শব্দের সহিত শুষ্ক পত্র বহন করিতে থাকিয়া, সমুদ্রের জলাবর্ত্তের ন্যায় (ঘোলার মত) ঘুরিতেছিল ॥৫৭॥

अन्वयः—कृतक्षणं प्रवासिनं प्राणपतिं साक्षात् उपागतं अवीक्ष्य युवतेः अन्तर्ज्वलितः मुहुःसहः महातपः मध्यन्दिनभास्वदातपं जिगाय ॥५८॥

कृतेति। कृतः क्षणः आगमनसमयनिर्द्देशो येन तम्, प्रवासिनं विदेशस्थम्, प्राणपतिम्, साक्षादुपागतमुपस्थितम्, अवीक्ष्य अनवलोक्य, स्थितायाः इति शेषः; युवतेः, अन्तः हृदयाभ्यन्तरे ज्वलितः, मुहुःसहो महातपः तीव्रशोकः, मध्यन्दिनभास्वतो मध्याह्नसूर्य्यस्यातपं घोतम्, जिगाय जितवान्।

क्षतः कुलायालयकोकिलेन यः
कुहूरवः काननतोऽन्तरेऽन्तरे ।
वियोगिनीनां स मनस्सुहृरिति
ततान पीड़ापिशुनं प्रतिस्वनम् ॥६०॥

अत्र सन्तापविरहवेदनयोर्भेदेऽपि महातपपदेन तयोरभेदाध्यवसायादेकातिशयोक्तिरलङ्कारः, जयासम्बन्धेऽपि तत्सम्बन्धोक्तेरपरा चातिशयोक्तिः, छेकानुप्रासश्चान्य तेषां मिथो निरपेक्षतया संसृष्टिः ॥५८॥

বাঙ্গালা—প্রাণতুল্য প্রিয়পতি সেই সময়ে আসিবেন এইরূপ নির্দ্দেশ করিয়া বিদেশে গিয়াছিলেন, কিন্তু তখনও তাঁহাকে প্রত্যক্ষে উপস্থিত না দেখিতে পাওয়ায় যুবতির হৃদয়ের ভিতরে অতিদুঃসহ বিশাল আতপ, মধ্যাহ্নসূর্য্যের আতপকে জয় করিতেছিল ॥৫৯॥

अन्वयः—कुलायालयकोकिलेन अन्तरे अन्तरे काननतः यः कुहूरवः क्षतः सः वियोगिनीनां मनसि उहः इति पीड़ापिशुनं प्रतिस्वनं ततान ॥६०॥

क्षत इति। कुलायो नीरमालयोऽवस्थितिस्थानं यस्य स चासौ कोकिलश्चेति तेन, अन्तरे अन्तरे, मध्ये मध्ये, काननतो वनात्, यः कुहूरवः क्षतः, स कुहूरवः, वियोगिनीनां विरहिणीनां रमणीनां मनसि, 'उहः' इति तत्यम्, पीड़ापिशुनं वियोगवेदनासूचकम्, प्रतिस्वनं प्रतिध्वनिम्, ततान विस्तारयां चकार ; कोकिलरवस्योद्दीपकत्वात् प्रतिध्वनेश्च प्रायेण ध्वन्यनुरूपत्वादित्याशयः ।

अत्र तादृक्प्रतिस्वनोत्पादनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

"कुलायो नीरमस्त्रियाम्" इति "पिशुनौ खलसूचकौ" इति चामरः ॥६०॥

बहिः प्रसक्तं तपनातपैर्वपुः
सुशीतलं स्वेदजलं किलाकरोत् ।
अनङ्गतप्तं पथिकाङ्गनामनः
निरुद्धमप्यम्बुजलं न किञ्चन ॥६१॥

---

বাঙ্গালা—নীরবাসী কোকিল মধ্যে মধ্যে বন হইতে যে 'হুহুরব' করিতেছিল, তাহাই বিরহিণী রমণীগণের হৃদয়ে 'উহু' ইত্যাকার বিয়োগবেদনাসূচক প্রতিধ্বনি উৎপাদন করিতেছিল ।৬০।

अन्वयः—स्वेदजलं किल तपनातपैः बहिः प्रसक्तं वपुः सुशीतलं अकरोत् । (किन्तु) निरुद्धं अपि अम्बुजलं अनङ्गतप्तं पथिकाङ्गनामनः किञ्चन शीतलं न अकरोत् ॥६१॥

बहिरिति । स्वेदजलं घर्म्मवारि कर्तृ किल, तपनातपैः सूर्य्यरौद्रैः, बहिः प्रतप्तम्, वपुः शरीरम्, सुशीतलमकरोत् । किन्तु, निरुद्धम् अन्तरे अवरुद्धमपि, अम्बुजलं कर्तृ, अनङ्गेन कामेन तप्तम्, पथिकाङ्गनायाः प्रोषितप्रियायाः विरहिण्या रमण्या मनः, किञ्चन किमपि, शीतलम्, न अकरोत् ।

भानोर्भानुमहोष्णतामनुभवन् पद्मातपत्रान्तरात्
यानश्रान्तनितान्ततान्तकरणो गच्छन् स मध्यन्दिने ।
स्वच्छे व्योमनि यामिनीमणिमिव श्रीद्वारकापत्तनं
सिन्धौ सौधविभाविभासितसितं दूराद्ददर्शादरात् ॥६२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
मध्याह्नवर्णनं नाम सप्तमः सर्गः ॥७॥

———०:०:०———

अन्वयः—मध्यन्दिने यान-श्रान्त-नितान्त-तान्त-करणः सः पद्मातपत्रान्तरात् भानोः भानुमहोष्णतां अनुभवन् गच्छन् (च) स्वच्छे व्योमनि यामिनीमणिं इव सिन्धौ सौध-विभा-विभासित-सितं श्रीद्वारकापत्तनं दूरात् आदरात् ददर्श ॥६२॥

इत्थं प्रासङ्गिकं मध्याह्नवर्णनं समाप्य प्रकृतमनुसरन् भाविसर्गं सूचयन् प्राक्प्रस्थितस्य रुक्मिण्या दूतभूतस्य ब्राह्मणस्य द्वारकानगरीदर्शनमाह भानोरिति । दिनस्य मध्यं मध्यन्दिनं तस्मिन् मध्यन्दिने मध्याह्नकाले, यानेन दीर्घपथगमनेन श्रान्तानि आयस्तानि नितान्ततान्तानि अत्यन्तक्लान्तानि च करणानि चरणादीनीन्द्रियाणि यस्य सः, स रुक्मिण्या दूतभूतो ब्राह्मणः, पद्मातपत्रं पर्णमयं यत् छत्रं तस्यान्तरात् मध्यादपि, भानोः सूर्य्यस्य, भानूनां किरणानां महोष्णतामनुभवन्, गच्छन् रुक्मिण्याः शीघ्रावश्यकत्वात् द्वारकां प्रति व्रजंश्च सन्, स्वच्छे निर्मले व्योमनि आकाशे, यामिनीमणिं चन्द्रमिव, सिन्धौ समुद्रे, सौधानां राजसदनानां या विभा शुभ्रप्रभा तया विभासितो विशेषेण प्रकाशितः सितः शुभ्रवर्णो यस्य तत्, श्रीद्वारकापत्तनं श्रीमद्द्वारकानगरम्, दूरादेव, सौन्दर्य्यातिशयेनादरात्, ददर्श ।

अत्र श्रौतोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्च इत्येतेषां संसृष्टिः ।

"भानुः किरणसूर्य्ययोः" इति विश्वः । "करणं साधकतमं क्षेत्र-गात्रेन्द्रियेष्वपि" इत्यमरः ।

द्वारकायाः कृष्णाधिष्ठानात् देवस्थानतया श्रीपूर्व्वकमभिहितं तत्, "देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिपं तथा । सत्त्वं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत् ॥" इति स्मृतेः । अत्र गुरुस्थानमिति गुरुपदं देवस्याप्युपलक्षणमिति गुरवः । श्रीमत्त्वं लक्षणया वा ।

मध्यन्दिनमिति "पृषोदरादयश्च" इति निपातः । "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यमरोक्तिप्रामाण्यात् सितमन्दोऽत्र गुणवचनः ।

शार्द्दूलविक्रीडितं छन्दः ॥६२॥

अत्युत्तरबिन्दुमिते शकाब्दे सौराश्विने पञ्चदशे दिने च ।
मङ्गलवारान्वयसंयुतेयं समापिता सप्तमसर्गटीका ॥

इति श्रीहेमचन्द्रतर्कवागीशविरचितायां रुक्मिणीहरणटीकायां
विपिनाख्यायां सप्तमः सर्गः ॥७॥

বাঙ্গালা—রুক্মিণীর দৌত্যকার্য্য করিবার জন্য মধ্যাহ্নকালে সুদীর্ঘ-পথ গমন করায় সেই ব্রাহ্মণের প্রায় সমস্ত ইন্দ্রিয়ই পরিশ্রান্ত ও অত্যন্ত ক্লান্ত হইয়াছিল এবং তিনি পত্রময় ছত্রের অভ্যন্তর হইতেও সূর্য্যকিরণের গুরুতর উষ্ণতা অনুভব করিতেছিলেন ; তথাপি তিনি কার্য্যের গুরুত্ব-বশতঃ গমন করিতে থাকিয়া দূর হইতেই আনন্দপূর্ব্বক দ্বারকানগরী দর্শন করিলেন। নির্ম্মল আকাশে পূর্ণচন্দ্রের ন্যায় সমুদ্রমধ্যে সেই নগরীটী বিরাজ করিতেছিল এবং অট্টালিকাসমূহের শুভ্রবর্ণে সেই নগরীটীর শুভ্রবর্ণ আরও উদ্ভাসিত ছিল ॥৬২॥

## अष्टमः सर्गः ।

———:०:———

नाविको गुरुगम्भीरं कल्लोलकुलसङ्कुलम् ।
अश्रान्तं तं सरस्वन्तं नाव्यमिनमतीतरत् ॥१॥
ततार तरणेस्तीरे तरण्यातपतापितः ।
शीतपाषाणसोपाने पानीयापीनपीड़ितः ॥२॥
द्वारकान्तःसभाद्वारं प्रतिहारिप्रदर्शितम् ।
शेषशायिसभाशेषं विशन्नेष निरैक्षत ॥३॥
घनः श्यामो घनस्येव नर्त्तयन् शिखिदम्पती ।
सभावसानं संसूच्य शङ्खस्योदचरच्चिरम् ॥४॥
शृङ्गादिव तुषाराद्रेः स्रोतस्विस्रोतसोऽश्रसाम् ।
केशवस्य सदश्वानां गोपुरात् परिनिर्ययौ ॥५॥
जनौघं तं विनिर्यान्तम् अविश्रान्तप्रसारिणम् ।
अतिचक्राम पार्श्वेन शैलसिन्धुमिव द्विपः ॥६॥
प्रविश्य नगरान्तः स बभूव हर्षितान्तरः ।
अदृष्टपूर्वसौन्दर्य्य-विलोकलोललोचनः ॥७॥
लक्ष्मीपतेः पुरो लक्ष्मीम् अचिलच्चीचकार सः ।
स्वच्छेऽमरावतीच्छायाम् अम्बुधाविव विम्बिताम् ॥८॥
रत्नावलीविलम्बिन्यः कान्ताश्चारुमरीचयः ।
चत्वरेऽन्योन्यसंयोगात् इन्द्रेष्वासश्रियं दधुः ॥९॥

विशेषरत्नशीतांशु-निःशेषनिहतश्रमः ।
नापेक्षते स्म सुस्थः सन् आकर्ण व्यजनानिलम् ॥१०॥

विचिन्वन् शार्ङ्गधन्वानं लुलोके लोकमण्डले ।
ददर्शयाऽऽश्रमसमपि प्रभावसंयुतं तु तम् ॥११॥

गिरीशगिरिशुभ्रांशु-रेवतीजानिपाणिना ।
गङ्गाम्बुनाऽऽश्लिष्टहोताङ्गं प्रवाहमिव यामुनम् ॥१२॥

सवारिवारिदश्यामं पीतकौशेयवाससम् ।
तप्तकाञ्चनसम्बद्ध-महानीलमणिद्युतिम् ॥१३॥

प्रियङ्गुकुसुमासन्ने कुन्दपुष्पमिव स्फुटम् ।
बिभ्रतं नीलनासान्ते मुक्तिमौक्तिकमेककम् ॥१४॥

जगत्तिलकता तस्य बोधयन्तमिवाखिलान् ।
ललाटे तिलकं कान्तं धारयन्तं छिदान्तरम् ॥१५॥

भक्तपापपशुच्छेद-यूपनिभोज्ज्वलात्मना ।
तिलकेन ललाटान्तः पथया भान्तमुच्चकैः ॥१६॥

मणिचूडाचरत्नाक-मरीचिचयचुम्बितम् ।
प्रभया बर्हिणो बर्हं गर्हयन्तमिवात्मनः ॥१७॥

स्तनप्राप्यम्लानां मालां पीवरोरःस्थलस्थिताम् ।
गोपीप्रियाङ्गविषम-शीकलक्ष्मेव बिभ्रतम् ॥१८॥

गोपाङ्गनाप्रनाघात-कलङ्कमिव वक्षसि ।
श्रीवत्सलक्षणं स्पष्टं दधानं चन्दनाञ्चितम् ॥१९॥

सूक्ष्मत्वेनाखिलं कार्य्यम् अस्ति कारणवस्तुनि ।
सांख्योक्तमिति शंसन्तं कन्दर्पजनकं स्फुटम् ॥२०॥

असत्यामपि योषायां जनयन्तं सुतं स्मरम् ।
अजातेनापि जातेन त्रिजगत्प्रथितीकृतम् ॥२१॥

स्मितदन्तसितद्योतस्नातां रोमाङ्कुरावलीम् ।
कैशोरस्येव सीमानं बिभ्राणं दन्तवाससि ॥२२॥ (कुलकम्)

अनंसीत् सहसा शौरिः निनंसुमिममागतम् ।
अहो ! लोकललामस्य विनयः खल्वलङ्कृतिः ॥२३॥

आतिथेयोऽतिथेस्तस्य नयविद्विनयान्वितम् ।
अन्वयुङ्क्त स कल्याणं कल्याणाकारदर्शनः ॥२४॥

सोऽपि कृष्णमनाः शौरिम् अनामयमनारतम् ।
पृच्छन्नुत्तरमादत्त दत्तोत्तरमनःसुखम् ॥२५॥

क्वणत्कङ्कणहस्ताभिर्वामाभिरुपवीजितः ।
चतुर्विधमुदारान्नं मुदा सुस्वादु सस्वदे ॥२६॥

हैमपर्य्यङ्कशय्याङ्के निषण्णे सुहसानने ।
विश्रान्ते तत्र गोविन्दः पादपीठमविन्दत ॥२७॥

कुतस्त्यः कथमत्रेति पिपृच्छन्तं निनंसया ।
वलिच्छलस्तुतेऽप्येनं वामनीकृतविग्रहम् ॥२८॥

कोमलस्पर्शिना शीर्षं स विप्रः पाणिना स्पृशन् ।
आचख्यौ सस्मितं कृष्णं श्वेतयन् दन्तरोचिषा ॥२९॥ (युग्मकम्)

अनन्यगो गुणस्तेऽसौ रूपस्य नयनामृतम् ।
मन्ये परस्परस्पर्द्धि देहे साम्राज्यमिच्छति ॥२०॥

सजलाभ्रतनो ! बिभ्रत् अकाले सकलाः कलाः ।
असितपक्षमिव व्योम आचष्टुद्दर्शि शीतगुम् ॥२१॥

अनन्तगुणकान्तस्य कान्तिः किन्तु महासुखम् ।
स्वर्णे सौरभमित्यस्य प्रवादस्य निदर्शनम् ॥२२॥

चापल्यं शोभते बाल्ये धैर्यं वैधुर्यसूचकम् ।
मुकुराङ्कुरो हि संसार-प्रवाते न स्थिरायते ॥२३॥

जनानां यौवने जातु विलासो नहि दुष्यति ।
नवीनस्य प्रवालस्य शोणतैव हि शोभते ॥२४॥

वलीपलितनिःसारे स्थविरस्योर्न शस्यते ।
नहि शुष्कसरोजस्य दलं मध्वपि कान्तिकृत् ॥२५॥

अकाले तु विलासानां जलदानाञ्च दर्शनम् ।
न चोपकुरुते किञ्चित् प्रत्युतोद्वेजयत्यलम् ॥२६॥

अर्थमाना प्रहसिते हर्म्ये शर्मकरे चिरम् ।
दृष्टेर्विषयतां याति सुधांशुरिव मानवः ॥२७॥

धर्मकर्मोरुसदामः प्राप्य सेवा तनूतरिः ।
संसारसागरोत्ताल-कल्लोलैर्न विहन्यते ॥२८॥

शैशवे साधिता शिक्षा वर्त्तते पुरुषायुषम् ।
यत्नोद्धृतनगोर्गन्धे तज्जस्य स्थिरमव्ययम् ॥२८॥

शिक्षया खलु लोकोऽयं प्राधान्यमुपगच्छति ।
रोचिरेव हि रत्नानाम् उपलेभ्योऽतिरिच्यते ॥४०॥

अनुकार्य्यत्वमाधातुं यतेत नानुकर्त्तृताम् ।
राममेव हि संस्तौति नटं नास्याभिनायिनम् ॥४१॥

यं यं प्रार्थयते लोकः तं तं सन्दर्शयन् गुणम् ।
प्रत्यक्षः शिक्षया याति नृणामादर्शतां नरः ॥४२॥

उपकारो न बन्धूनां नापकारो च वैरिणाम् ।
स्वकार्य्याशक्तः परवान् शवयोपैति तुल्यताम् ॥४३॥

तर्ष्यमानोऽपि संसत्सु प्रसादमभिलाषुकः ।
पराधीनविड़ालोऽयं खादत्युत्कोचमूषिकम् ॥४४॥

परप्रयोजनाधीन-वृत्तिः परपदं लिहन् ।
परार्थं जागरूकश्च शुनकः परवनापि ॥४५॥

उच्छिष्टप्रार्थिनः सिंहात् ऐहिकादन्यजन्मनि ।
स्वातन्त्र्यार्थं हतः क्वापि श्रेयान् मानुषपूर्वकम् ॥४६॥

स्वभीतान् प्राणिनः कुर्वन् हस्तिमान् स्वयमर्ज्जितैः ।
आश्रयन् गहनं दुर्गं धन्यः पुरुषकेशरी ॥४७॥

धर्मः समुदितः सोऽयं कैशोरे त्वयि वर्त्तते ।
उदात्त्येव हि शोभन्तो गुणो नापेक्षते वयः ॥४८॥

हित्वा हेतुमनर्थानाम् अविद्यामिव वैरिताम् ।
तटास्पदात् स्थितो दूरे मुक्तात्मा प्रकृतेरिव ॥४९॥

चिरशान्तमहाऽमित्रः मकरध्वजहृत्तिमान् ।
रामाभिलषितासक्तिः अद्वितीयोऽधुना भवान् ॥५०॥

इत्यालप्य द्विजन्मासौ जन्मावधि यशस्विनम् ।
सुस्पर्शमस्पृशत् पाणेः शीतलेन तलेन तम् ॥५१॥

ततस्तत्समहानन्दं सुचिरं रुचिरं वचः ।
स्मरन् स्मरकृषिर्विप्रम् अदः समदमूचिवान् ॥५२॥

तवास्वाद्य सुधास्वादां सूक्तिं युक्तिसहामिमाम् ।
क्षणोऽपि चिरदाम्यास्मि प्रक्षालितमनोमलः ॥५३॥

खगोऽपि कानने कौति कीचकोऽपि प्रकूजति ।
वक्ति यः परभावज्ञः स वक्ता भक्तिभाजनम् ॥५४॥

द्विजः परभृतः स स्याद्यश्चोन्मादयति स्वनैः ।
स्वतन्त्रः स द्विजो यस्तु तैरेव शमयत्यलम् ॥५५॥

अमन्युक्तः परो बन्धुः वर्णं निर्भर्ति रक्षकम् ।
अनाचार्यो ज्ञानदाता यथेष्टं यो हितं वदेत् ॥५६॥

अस्मिन् संसारकान्तारे शुभवाटपमर्दिनम् ।
वागङ्कुशो निगृह्णाति मनोदन्तिनमुत्पथम् ॥५७॥
प्रतिभानुत्कृष्टस्य शिक्षा नोपैति योग्यताम् ।
तपने गर्जति व्योम्नि नहि दीपमपेक्षते ॥५८॥
मयं निविशते यत्र सूक्ष्मा सुषिरभिन्दती ।
मलयस्थां रवेर्मूर्त्तिः प्रतिभा भासयत्यपि ॥५९॥

अनुक्तामपि सामर्थ्यात् पदवीमवगाहते ।
प्रतिभा नरमादाय शिक्षितेव तुरङ्गमी ॥६०॥

सर्वं रहस्यसम्भूर्त्तिः अन्तरप्रतिवासिनी ।
अत्यान्तगत्याप्यत्यान्ता प्रतिभोपैति सज्जनम् ॥६१॥

अविषयमपि सत्त्वेषु तीक्ष्णेन मतितेजसा ।
भासयत्यखिलं विद्वान् भास्वानिवोदयं गतः ॥६२॥

शून्यमापद्यमानोऽपि परार्थमनिशं भ्रमन् ।
न केन स्तूयते विद्वान् शान्तमूर्त्तिस्तमोनुदः ॥६३॥

उच्चैर्मार्दोऽयमस्मासु क्षुद्रेषु युज्यते न ते ।
मण्डूके करिसाम्योक्तिः भङ्गीभेदेन गर्हणा ॥६४॥

हितमस्माद्दशान् वक्तुम् उपस्थानं भवादृशम् ।
आलोकनाय लोकानां भ्रमतीन्दुस्तमोपहः ॥६५॥

इत्यालप्य व्यरंसीत् स नतानतसरोरुहः ।
योग्यमन्यां ततो वाचं व्यग्रता-पिशुनेक्षणः ॥६६॥

श्रुवतः स्वरमाधुर्यं विभाव्य च दृशोः श्रियम् ।
तासां वाचामलम्भय ब्राह्मणः पुनरालपत् ॥६७॥

लोकेऽस्मिन्नातिदुर्लभ्याः अर्थाः परिजनाय वा ।
गतः पुनरनावर्त्ती समयो हि सुदुर्लभः ॥६८॥

अधिका मेऽभवन्नद्धा अविदन्तो विदन्त्यदः ।
वस्तुतस्ते न वर्द्धन्ते क्षीयन्ते हि शरीरिणाम् ॥६९॥

नानाभावां विजानानः ईदृशीं जागतीं गतिम् ।
न केवलोपदेशाय देशेऽस्मिन् गतिमादिशम् ॥७०॥

विदर्भाधीशितुर्धन्या कन्या कन्यासु मन्यते ।
व्याख्येया सा यया सम्यङ् नेष्यते वागमूदृशी ॥७१॥

नापि स्यादुपमोच्येया समानविषया हि सा ।
मद्वैतत्वादसामान्यात् जगत्स्वेषा विलक्षणा ॥७२॥

यत्र यदिन्द्रियग्राह्यं तत्त्, तेनैव तायते ।
व्यक्तीभवति वाङ्मात्रात् न रूपं सम्यगात्मनि ॥७३॥

प्राक्परस्योः परं रूपं दृशोर्यदि ततार्यता ।
तस्या एव तदा रूपं साक्षात्कृत्येति मन्यते ॥७४॥

प्रस्थानं नीयमानेव समीरेण तरङ्गिणी ।
नितान्तचञ्चला बाला प्रेषयामास मासकौ ॥७५॥

विकसन्नलिनीकान्ता सरसी च नवाङ्गना ।
मारस्य वयसः पातात् गाम्भापि तरलायते ॥७६॥

सतो स्वतः प्रैति पतिं स्वयोग्यं
सुधायते तत्र गुरूपदेशः ।
मन्दाकिनी शैलपतेर्निपत्य
ययावजस्रं स्वयमेव सिन्धुम् ॥७७॥

पालस्य ते पत्रमपत्रपाकुला
दद्यामिदं रागनिदर्शनं मया ।
यतो विलोला नवफूलशालिनी
विकीर्य्य गन्धं श्रयते हि पादपम् ॥७८॥

इत्थं चिवानुचितमेव यदा प्रदाय
शोणोत्पलामलकरे लिपिमास्त तूष्णीम् ।
उच्चागयाकुलतया गुरुगद्गदया च
शौरिः स्म वाचयति तां ललिताक्षराढ्याम् ॥७९॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये संलापो नाम
अष्टमः सर्गः ॥०॥

——:०:——

# नवमः सर्गः ।

———:०:———

स्मरसुन्दर ! स्मरणमात्रवल्लभ !
रमणीप्रियातिरमणीयसद्गुण ! ।
शशि-चन्द्रमः-सम- यशोऽतिविक्रम !
हृदयाम्बरे पदयुगं निधेहि मे ॥१॥

विनिवेदने गुरुषु गौरवच्युतिः
स्वयमर्थने चपलता च धृष्टता ।
त्रपया स्थितिस्तु परमात्मवञ्चना,
वद नाथ ! किमु करणीयमत्र मे ॥२॥

गलितत्रपामलमलभ्यलालसां
वद मां तथापि परमाश्रयो भवान् ।
ललना लताप्यमलमूलशालिनी
धवमन्तरेण नहि जातु जीवति ॥३॥

विधिना तव प्रविहितं हितं हृदे !
इममंशमुज्ज्वलरुचे ! कचीकरम् ।
शुनको न कोऽपि हरतामनीहया
सदृशो गुणाशय ! विजागृहि द्रुतम् ॥४॥

पशुरस्मि हीनमदनम्मतिः किल
पशुपाल ! पालयतु मां तथापि नीम् ।
पशिशुः मतो नहि यथा पशूपम-
शिशुपालपाणिग्रहगामिनी म्रिये ॥५॥

भवनागतेन ननु नाथ ! नाथितः
परिरब्धुमर्हसि न मामकिञ्चनाम् ।
स्ववतीः समेत्य सरितः पयोनिधिः
घनवारिबिन्दुमभिविन्दते न किम् ॥६॥

पुरुषोत्तमो गुणितमः स्वलालसाम्
भवदाधमां न विगुणां विनिन्द्य माम् ।
कमते न किन्नु सरसा रसा-वनिं
भुवि लालसा निरवधिर्हि जन्मिनाम् ॥७॥

मधुचारचारणगणाननेरितः
चिरभावनारचितविश्वगोपितः ।
अनिशं दृगोरविषयं गतोऽपि सन्
उपकण्ठमर्पित इव प्रभासि मे ॥८॥

ननु कृष्णचन्द्र ! समुदित्य नित्यशः
ललितेऽत्र शून्यहृदये करं किरन् ।
अनिनायि नं जनमिमं यशःसितः !
कुमुदं प्रमोदय चिर-स्वयाचकम् ॥९॥

त्वदधीनवृत्तिरधुनात्मना शपे
नहि कैतवादिति भवन्तमालपम् ।
प्रतिधीयते जगति यत्र जीवनं
सुजनो न जातु किल तं हि वञ्चति ॥१०॥

इदमेव रासरसिक ! स्मर स्वयम्
अधिकं ब्रवीमि भवतेऽहमीदृशम् ।
परितो हि सौरभभरे प्रसारिणि
सुमना मनागपि चलेत नालिनम् ॥११॥

अनुरागसूत्रवलितां चलाचलां
सुचिराय चारुचरणान्तचारिणीम् ।
अपराधिं तामपरगां शुचिप्रियां
वनमालिकां त्वदयितामवेहि माम् ॥१२॥

दमघोषसूनुवशतामवाप्नुम
मरणं वरं मरणमेव वा भवेत् ।
किन्तु कौमुदी वलति भास्वता धृता
मनसोऽनुकूलमिह जन्तुजीवनम् ॥१३॥

यदि नो भवान् यदुपते ! घनद्युते !
चपलामिमां प्रकुरुषे स्वचारिणीम् ।
अचिरप्रभेव भविता स्वहेतुतः
क्षणमुल्लसन्त्यपि लयं गता पुनः ॥१४॥

प्रणिशम्य कोकिलकुलस्य काकलीम्
अवलोक्य सोपचितशीतदीधितिम् ।
परिदृश्यसे च परिरभ्यसे न तु
किमनङ्गवत् भवतोऽङ्गसंहतिः ॥१५॥

गृहमाम्बिकेयमभियायमागता
भजते विवाहदिवसे कुमारिका ।
इदमस्ति नः किल कुलव्रतं विभो !
तदहो ! मयापि करणीयमादरात् ॥१६॥

अजिताक्षि तत्र ससखी परश्शतैः
परितो वृता प्रहरिभिर्धृतायुधैः ।
हर मां मनोहर हरे ! पराक्रमी
दलयन् परान् खगपतिः सुधामिव ॥१७॥

स्वविचर्विते क्षुरसमुत्तमं विदुः
स्वयमाहृतञ्च कुसुमं परं प्रियम् ।
हरणं प्रसह्य परमं प्रतिग्रहात्
नहि विक्रमी परमुखं प्रतीक्षते ॥१८॥

ननु ! बाहुजस्य मुनयोऽनुमन्वते
प्रसभं हृतिं गुणितया गुणिप्रिय ! ।
ध्रुवमेव विश्वसिति तद्भवानिदं
भुवनं शिशिरयिषुरागतः सितो ॥१९॥

विशिखस्य पञ्चशिखिस्य पञ्चता
मयि सम्प्रति प्रति भवन्तमुत्सुकैः ।
अनुपागते त्वयि तदेति निश्चितु
भवितासितेर्मन ! ममैव पञ्चता ॥२०॥

इति वाचयन् वचनकौशलादसौ
बहुभावभावितमुखः सतां मुखम् ।
अतिदूरतः प्रथमरागतः स्मरः
विविनक्ति वोच्छ्वसिति वा स्म सीदति ॥२१॥

तिमिरान्तरे सपदि पूर्णदीपिकां
मरुमण्डले सुसरसीं गरीयसीम् ।
स्वयमर्थिनीं प्रथमयौवनेऽबलां
सशरीरमागमनं नृणां विदुः ॥२२॥

अपि संवरीतुमभिलाषिणो हरेः
प्रविकस्वरं स्मितमभून्मुखाम्बुजे ।
सुगभीरतां समुदस्य हि द्रुतं
हृदयाम्बुधे स्फुरति भावनिर्भरः ॥२३॥

अपरोक्षगामिव समीक्ष्य रुक्मिणीं
विकलोऽभवत् स लिपिलाभमात्रतः ।
ददती लिपिं हृदयमस्य साहरत्
गुणगौरवव्ययपदत्तजीवना ॥२४॥

विषयं विदर्भतनयामनीषितम्
उररीचकार स हरिस्तदा हृदा ।
विजहासि किं जलधिरागतां नदीं
व्रततिं न वा तरुरुपेक्षते श्रिताम् ॥२५॥

इति चेतसा निजमतं विहरन्ति
स्मितसुन्दराननतवक्रमच्युते ।
पुनराहमनह्विजनिरेव पेशलं
नहि बुद्धिमान् परमनो न बुध्यते ॥२६॥

भन्नमच्युताच्युतमते ! विकम्पर ते
उपपाद्यतां नृपसुताङ्गतार्थता ।
भवनान्तरे स्वयमुपेतकौमुदी
वद केन नाम वसनैः पिधीयते ॥२७॥

परमोज्ज्वलां विमलवर्णशालिनीं
नृपभोगयोग्यसुभगामतिप्रियम् ।
अपि रुक्मिणीं सुरसचेतनामिमां
प्रविदाङ्करोतु ननु चेतनान्तु ताम् ॥२८॥

इयमुत्तमापि नगरी गरीयसी
नहि शोभते योग्यरुक्मिणीं विनाधुना ।
सुरसापि चारुसरसी महीयसी
नलिनीं विना न खलु पुष्यति श्रियम् ॥२८॥

भविता च यातिचिरमर्हदेहिनी
परिचीयतां प्रथममेव सा गुणैः ।
असलक्ष्म दोऽपि घटिका परीक्ष्यते
क्रयणेऽङ्गुलीप्रहरणैश्च वारिभिः ॥३०॥

सुरसेव कृष्ण ! वसुधातले सुधा
प्रियदर्शनेव परिपूर्णचन्द्रिका ।
ननु सा च सा च ललिताऽबला सती
विपयेष्वियं किमपि वस्तु वास्तवम् ॥२१॥

सुखपुष्पिका स्तनफला सुकोमला
गुणसौरभा च विपयोष्णवारिणी ।
ललिता सुवर्णलतिका कुलाबला
रससेकतः क्रमिकपुष्टिशालिनी ॥२२॥

प्रियभाषिणी गुणवती नवा वधूः
भजते सुदुर्गतमपीह यं जनम् ।
अमरावती यत स सम्भृतेव चेत्
न तदा सती भुवि विभाति वा श्रियः ॥२३॥

शततापितापि न भवेद्विरूपिका
मुहुराहतापि नहि भङ्गमेति वा ।
प्रभवे सदा शुचिरुचिः प्ररोचते
ललना सती च कनकस्य मालिका ॥२४॥

विदधाति वेद इव नीरसं गुरुः
अपि नीतिवत् सरसनीरसं सुहृत् ।
सरसं कलत्रमिव काव्यमुत्तमं
परलौकमैहिकमिति द्वयं क्रमात् ॥२५॥

परमुन्नयन्त्यलमधोगतं जनं
विषमेषु दुःखितहृदां प्रसादिनी ।
कुलदेवतेव कुलसम्पदां प्रसूः
गृहिभिः सदैव गृहिणी निषेव्यताम् ॥३६॥

भजते करी जलजिनीं जलं मथन्
दिवसश्रियश्च तिमिरं हरन् रविः ।
रिपुसैन्यचक्रमवजित्य रुक्मिणीं
सहकीर्त्तिमाहर हरे ! पतिंवराम् ॥३७॥

लिपिमात्रतोऽस्य समभूत्सुकं मनः
वचसा ननक्तं निपुणद्विजन्मनः ।
समयोपयोग्यनुगुणश्च भाषितः
त्वरितं तनोति हृदये तडित्क्रियाम् ॥३८॥

इह मन्त्रकर्म्मणि भवान् पुरःसरः
प्रणवो यथास्य परमार्थवाचकः ।
प्रयतिष्यते भवदुदीरिताध्वनि
गिरमित्यमस्य हरिरन्वमोदत ॥३९॥

अथ दारुकं निभृतमाजुहाव स
प्रथमप्रचारकृतदीपभीरुकः ।
त्वचिसार उत्स्खलति मारुतं स्पृशन्
अभिहत्य गर्जति घनस्तु साग्रयान् ॥४०॥

तमुपागतं स निदिदेश सारथिं
रथयोजने प्रभुरयोजनं शमी ।
गतपूर्वं कार्यमयमभ्युपागमत्
तदमुष्य काम्यमिव पारितोषिकम् ॥४१॥

विविधैर्निजैः प्रहरणै रणाश्रमैः
तुरगैर्यतुर्भिरसितैस्तरस्विभिः ।
सुखभोग्यपञ्चपदिनप्रवर्त्तिभिः
बहुवस्तुभिश्च समलङ्कृतं नवम् ॥४२॥

प्रणमन्नरं हरिरभीष्टदेवतां
सुखजन्मना सह तथा सदाशया ।
प्रतिकर्मचारुयितसत्कलेवरः
कृतसज्जं रथमारुरोह सः ॥४३॥ (युग्मकम्)

अथ स क्षिपन्निव दिशां कदम्बकम्
अभिवर्त्ति पत्तनमिव ग्रसन् मुहुः ।
समगाज्जवात् खगपतिं हसन्निव
परितर्पयन् सरथिसारथी रथः ॥४४॥

प्रथमः कविः स च पराशरात्मजः
स्थविरः स्थिरो वदतु तं जवं कथम् ।
भवभूतिरास्त तु समासचिन्तने
कियदामनेत् स तु शकुन्तलाकविः ॥४५॥

सविधस्थपार्श्वतरवः क्षणं पृथक्
अनुवर्त्तनास्तु वनवीथयः समाः ।
अभि दूरगाः स्वमभिधाविनो नगाः
सुजवं रथे दृष्टगिरे प्रधावति ॥४६॥

प्रथमा शताङ्गमभितो वनावली
प्रदधाव पृष्ठत इवास्तिरंहसा ।
पुरतः कियद्दूरव्यवहिता द्वितीयिका
प्रयती प्रदक्षिणमिवाभ्रमत् पुनः ॥४७॥

अपरस्परमिलिताः स्थलान्तरे
वृतिभिर्वृते रथपथस्य पार्श्वयोः ।
नवपक्षवालिविलसत्पलाशिनः
हरिदर्शनाज्जुघुर्णिरे सुखादिव ॥४८॥

रथवर्त्मनामुभयतो नतानताः
शतपर्विकादितृणराशयोऽसितैः ।
कुशकाशसूननिकरास्तु पाण्डुरैः
वसनैर्वृता इव ययुः समानताम् ॥४९॥

युगपत् सहस्रधनुषोऽन्तरे रवं
निशमय्य सन्निहितलोचनो जनः ।
अवलोकयन्नभिमुखे रथं कियत्
श्रुतवान् सहस्रधनुषः परन्तु तम् ॥५०॥

दिवि सप्तसप्तिरपि सप्तसप्तिभिः
रथमुद्‌व्रजन्नतिरथस्य तं रथम् ।
अवलोकयन् जवमलौकिकं किल
समनुद्रवन्ननुचरो बभाविव ॥५१॥

हरिदारुकौ चिरगत्यानुशीलिनौ
जवगौरवात् मन्दापतौ बभूवतुः ।
द्विजनिस्तु वेगजनितार्त्ति रच्य तत्
विधुताच्य तौ निजपदात् पदे पदे ॥५२॥

उपदिश्यमानमयनं द्विजन्मना
बहुचत्वराटविनगान्तरास्थितम् ।
समतिव्रजन् व्रजपतिः परेद्यवि
स विदर्भदेशमगमद्दिनत्रये ॥५३॥

बहुलोकजैः कलकलैः सुदूरतः
परिसूचिता निविविशे पुरः हरिः ।
निजकार्य्यवार्य्यपरकार्य्यसङ्गजना
मकरस्तरङ्गमुखरामिवापगाम् ॥५४॥

कुशलाशिषा सुखजनिजं नार्दनं
परिवर्द्धयन्नुपवने निवेशयन् ।
समसुत्सुकेन मनसास्य यातवान्
ललनाकुलाकुलविदर्भ नालयम् ॥५५॥

क्रमितुं स्वलच्यमभिलक्षयन् हरि-
रतनुं तनूमपि विनिह्नुते रहः।
स द्रुमं प्रवादमभजत् प्रमाणयन्
नृपकन्यकामभिलषन् लतालयम् ॥५६॥

अथ दारुके सहरथे बहिर्गते
न बभूव दूरगतया स निष्क्रियः।
भृशया तिरोहितदृशामविद्यया
परमात्मवन्नयनगोचरो हरिः ॥५७॥

आकर्षिणीमखिलजनस्य सद्गुणां
निदानभूतां महदागमस्य च।
मुक्तः पुमान् वा प्रकृतिं वनद्युतिं
स्वभोगयोग्यां मङ्गलामलोकयत् ॥५८॥

असितनलिननीलो भक्तसंसक्तशील:
कनकरुचिदुकूलः कान्तिकान्तानुकूलः।
घन इव घनचञ्चद्दिद्युदुद्यानमध्ये
निविडतिमिरपुञ्जाकाशकाशे चकाशे ॥५९॥

आलीनां ललितालिभिः समवयोरूपाभिरन्तःपुरे
योग्याकल्पविकल्पनेन मुदिताऽप्येकान्तचिन्ताकुला।
आयान्तं द्विजमन्तिके हरिकथाभावं निधायान्तरे
सा यद्वच्च सहासुखञ्च ससुखं राजात्मजालोकयत् ॥६०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
कृष्णप्रयाणो नाम नवमः सर्गः ॥९॥

## दशमः सर्गः ।

———:०:———

अथान्तिके कञ्चुकिनः कथञ्चन
सखीसभायाः सभयं जगाम सा ।
जलभ्रमिभ्रान्तसरोजिनीगणात्
प्रतीरमेकेव रयान्तरेरिता ॥१॥

यदा पदान्तेऽस्य ननाम नाम सा
तनूसवर्णातिसुवर्णभूषणा ।
तदेत्यवादीत् स विदन् विदर्भजे !
प्रसद्यतामद्य शुभं शुभे ! तव ॥२॥

ददर्श विप्रोऽथ गभीरचिन्तया
नृपात्मजाया मलिनं किलाननम् ।
तनोति चिन्तान्तरगापि सन्ततं
दृशोर्ललाटे लपने च लक्षणम् ॥३॥

विशालशङ्कादहनस्य नीरस-
च्छदिन्धनं सन्दहतो निरन्तरम् ।
उदीर्णबाष्पेण मलीमसाननां
इमामवोचन्नृपनन्दिनीं द्विजः ॥४॥

मनोरथस्ते सरथः समागतः
वधूपुरोद्यानतलेऽत्र विद्यते ।
लिपिर्यस्येव विशुद्धवर्णिका
निकामकामं कुरुतेतरां प्रभुम् ॥५॥

जगन्ति तावन्ति भवन्ति सन्ति च
विशन्ति चाश्रित्य युगे युगेऽपि यम् ।
मयाऽनयास्मिन् दयया त्वदीयया
कृतं कृतार्थं नयनं तदीक्षया ॥६॥

अदारयिष्यत् कुलिशं यदि क्षितिं
महामहेन्द्रो यदि वाऽप्लविष्यत ।
तदाऽभविष्यच्चकिता तथा न सा
विशृण्वती विप्रवचो यथाऽभवत् ॥७॥

समागतं विप्रमवेक्ष्य दूरतः
शनैः स्वतस्त्रयतुराः किलालयः ।
अनुद्रुतास्तन्निखिलं व्यशीशमन्
किशोरकाले सुलभं हि कौतुकम् ॥८॥

धिनोतु पद्मापतिरेव पद्मिनीं
ततः स कामः फलतात् सुखेन वाम् ।
जहातु हर्षं भुवि शश्वदा घनः
वदन्निदं प्रास्थित सुस्थधीर्द्विजः ॥९॥

स्वयं निशम्यापि चिरार्त्तविभ्रमः
प्रियाप्रयाणं निरणायि नो तया ।
न सम्भवा सम्पदपि प्रतीयते
प्रतीयते त्वापदसम्भवापि हि ॥१०॥

अये ! सरस्वन्तमियं तरङ्गिणी
चलन्त्यविश्रान्ततया पुरोमुखी ।
न जन्मभूजाततलाः प्रवीचते
किमु प्रमुक्ता प्रथमात् कृतघ्नता ॥११॥

विना मृणालीमलिना सरोजिनी
विहाय सन्ध्यां शशिना च शर्वरी ।
चिरानुगत्यं प्रतिहत्य मुच्यते
कृतघ्नताऽस्माज्जगतो गतैव किम् ॥१२॥

विलक्षणं प्राप्य सुखार्णवं नवं
कथं कथां नः महृशां स्मरेः स्वतः ।
न किञ्चिदस्मादपरं चतामहे
सुनीरसा न. सरसा स्मरिष्यसि ॥१३॥

चिराय युक्तैधि मनोहरे हरौ
घनं घनाङ्के चपला धलायताम् ।
नरेन्द्रपुत्र्याश्चिबुकं दधत्यदः
ससुप्रमन्तो सुखमालिरालपत् ॥१४॥

निशम्य सम्यग्वचनं सखीरितं
स्मितानना राजसुताऽवदत् पुनः ।
न कामिनी काचिदिहास्त्यमूदृशी
न या प्रियप्रेमगिरा प्रहृष्यति ॥१५॥

तरोस्तले किन्नु भवान् स माधवः
वदस्व विद्वन् ! शुभमागतं तव ? ।
स्फुटलशोकं ननु माधवोऽस्मि चेत्
शुभागतादः शुभमागतं मम ॥२६॥

विभासि रूपेण नवीननीरदः
स्थिरायतां मा चपला चिरं त्वयि ।
द्रुतं निशान्तं विगतातिकोमलाः
उपैति वर्षं स्तिमिता भविष्यव ॥२७॥

तव प्रिया नः प्रजिघाय रुक्मिणी
इतं तदस्मात्तु गिरा न युज्यते ।
न रुक्मिणी हीरकिणी च बाधिपा
सखीषु कुर्यादधिकं हि गौरवम् ॥२८॥

उदीर्य्यसे त्वं नरपुङ्गवो जनैः
कुरुष्व पन्थानमृजुं सदैव भोः ।
निरन्तरायं व्रजत स्थलान्तरं
हृदहिमायाहृत्तिभीतिरस्ति चेत् ॥२९॥

इत्थोदितः केनचनाप्यनाहतः
विचिक्लगश्च त्वमतो मलिम्लुचः ।
स एव मासस्तु मलिम्लुचाभिधः
स्वयं पतत्येव विविक्तगोऽपि न ॥३०॥

सभाजनार्थं समुपागता वयं
कथं त्वया क्रूरधियावधीरिताः ।
सदा वहिर्द्वारसभाग्रहान् विना
किमत्र मामागमतैकलं रहः ॥२१॥

नरेन्द्रपुत्रीमविदन्विदन्त्वया
प्रतारयन्नः स्वधिया प्रतारितः ।
स्तनोऽस्ति केशोऽस्ति, रमाकृतिर्हि सा
न चाधिकाङ्गी, किमु वेद्यमस्ति मे ॥२२॥

विधीयते किं खलता पदे पदे
प्रपद्यतामद्य सदर्थकं पदम् ।
विधातुमर्हैः खलतामजोऽपि न
न चास्ति भाषासु निरर्थकं पदम् ॥२३॥

वचःप्रयोगे तव दक्षता मुखे
इतः स्फुरत्यन्तरसारता न किम् ।
मखात् पुरो यद्युरीकरोमि तां
परन्तु चेदिच्छति वः सखी हि माम् ॥२४॥

उपेत यामः कथयाम रुक्मिणीं
हरिः परेषां विवरानुवृत्तिमान् ।
अये ! किशोरीः सुदृशो भवादृशीः
विलोकयन् को विवरं नहीहते ॥२५॥

प्रियं प्रियावाचिकमाचिकीर्षुणा
जिताश्च तां वीक्ष्य मधुद्विषोदितम् ।
कदाचिदर्थं प्रकृतं कृताग्रहं
न हेलया सत्पुरुषो जहाति हि ॥३६॥

सहासमाचार्यमवोचदच्युतः
परा प्रगल्भा च परार्द्धमालपत् ।
विभाति वामास्वधिका हि चातुरी
सरोरुहस्वचलता सताकुले ॥३७॥

सखी सुखं वः कुसुमेषु हृत्तिभाक्
भुनक्ति किं वा विधुलालसा च सा ।
न साऽलिनी यत् कुसुमेषु वर्त्तता
कुमुद्वती यत्र विधुस्त्व् याचताम् ॥३८॥

समन्ततः सन्ततमेव सद्गुणा
निगम्यते सा किमु सम्यगित्यलम् ।
सखी सतैले लिखिताऽसितोपले
सुवर्णलेखेव भवेद्भवत्यहो ॥३९॥

द्विजैर्वयस्या कियतो नु मादृशान्
न्यमन्त्रयत् पारतरीव नाविकैः ।
अलीककोलाहललाभलोभतः
हरीमनेकामिह सा समग्रहीत् ॥४०॥

समीरलोलं कुसुमं क्वचिदि्क्त
पतन् पतत्येव बहूनि षट्पदः ।
बहून्ययं कार्यमुपेत्य लिप्यते
न षट्पदोऽसौ तु चतुष्पदो ध्रुवम् ॥४१॥

मधुव्रतेभ्यो ददते न चेन्मधु
स्फुटन्ति पुष्पाणि कथं तदा मुधा ।
करीतुमन्धङ्करणं निजं रजः
दुराग्रभङ्गस्य दृशोः स्फुटन्ति हि ॥४२॥

सरागपुष्पात्सुमनोमुखं पिबन्
रसान्तरोऽन्योऽपि वरं प्रसूनलिट् ।
विहीनमूलैर्मनसः चमेत कः
सुखं प्रयातुं ननु गोपबालक ! ॥४३॥

भवीव ते दर्शनशक्तिशालिता
विलोक्यते पण्डितमानिता तु न ।
न गोपरागं रहमन्धतां गता
मता मवालापकलासुपेशला ॥४४॥

तडिल्लतेव प्रभया प्रभासये
घनेऽन्धकारेऽत्र भवाङ्गगोपिका ।
तदत्र वृन्दावनवाघले भवे
परिच्छया भद्र ! भवामि गोपिका ॥४५॥

दृष्टैकरम्भोपरि किञ्चिदुन्नतं
किमङ्ग तं राजति मोचिकायुगम् ।
नवानराणां खलु मोचया कियत्
फलं फलेनैव विपाकचारुणा ॥४६॥

करं किरत्येव निशाकरः स्वयं
स्वकीयपोडाशिकुमुद्वतीं प्रति ।
यतः शशाङ्कः सुचिरं कलङ्कितः
विधुन्तुदस्तं ग्रसते च भूयसा ॥४७॥

न धीरता धृष्टतयाऽनया शरैः
अभाजि भार्यासमभाविजैन्निषु ।
पुरःसरोजस्य यतोः सरिद्वरां
प्रगृह्य कुल्या जलधिं निम्नते ॥४८॥

स्पृशन् प्रसूनं छदनं समीरणः
जहाति नो या कुमुदं विधुस्तृपम् ।
न शैवलं नापि सरोजमग्रगमा
भवन्ति भृङ्गा हि समाः सहायनाः ॥४९॥

प्रियावयस्यास्वपि यो न चाटुकृत्
न कौशलं तस्य कलासु किञ्चन ।
न पद्ममाध्वीकमलिः पिबन् यदि
धुनोति पद्मं ननु पङ्कवेव सः ॥५०॥

सकेलिसंलापविलासहासतः
यथार्थमर्थं विरतोऽयंयन् हरिः।
नवं रसं सारसिनीश्रितं अहन्
कलद्विसं पल्लवैः क इच्छति ॥५१॥

प्रियां जिहीर्षन् बहुरचिरश्चितां
ययौ जिहासन् सुपथं निरापदम्।
विमृश्यमानो विपदं पदे पदे
सखीः प्रियाया इदमन्वयुङ्क्त सः ॥५२॥

सरोजशोभा विमला न शीतला
शशाङ्ककान्तिस्तुहिना न निर्मला।
चिरं निरुद्धा नितराञ्च शीतला
प्रलोभनीयेव मतिं वराऽवला ॥५३॥

त्वयं वरां वीक्ष्य वराङ्गनां गुणैः
निजैर्मनोहारिसुधासुधाकरीम्।
समस्तरत्नं परयत्नमार्जितं
चिरं प्रतस्थे गिरिकन्दरान्तरे ॥५४॥

समानमोदङ्गीतगुणामृतं पिबन्
यदीहयं संद्दपितोऽस्मि दूरतः।
वियत्र जानेऽथ समचवर्त्तिनो
विलासिनी मे प्रमदं विधास्यति ॥५५॥

परिस्रुताभिर्गु णवीचिवीथिभिः
प्रमाथिनीभिर्लवणसमोद्धृतेः ।
पुरीमिमामागमितः चतस्थितिः
परिश्रुतो भूमिरुहस्तटीमिव ॥५६॥

प्रमथ्यमानादुदगात् सुधाम्बुधेः
निखायमानादपि रत्नमाकरात् ।
उपैति हन्त स्वयमेव मामियं
श्रमं सदैवं समपेक्षते हि न ॥५७॥

बिभेमि नो भीमभटावलेपतात्
भवा विग्रहे छलनच मानिनाम् ।
अनेकजन्मार्जितसत्क्रियावशात्
भवेदियं लोचनगोचरो यदि ॥५८॥

विभिद्यतारीन् महती मनस्विनी
स्वमोजसा हारयितुं मयादिगत् ।
स्वयं निरस्यंस्तिमिरं तमोनुदः
नतो हि लोके दिवसश्रियं श्रयन् ॥५९॥

तदम्बिकायाः क्व नु सद्म विद्यते ?
कुतः कदा याति पुरा च रुक्मिणी ? ।
उपेत्य यादःपतिमोषधा मणेः
न याति सानो यदि लाभ एव सः ॥६०॥

दशमः सर्गः ।

मनोऽनुकूलं कथितं हरेरिदं
निपीय हृत्सारसभाससुज्ज्वलाम् ।
निवेशयन्त्या वदने स्मितच्छलात्
कयाचनावाचि वचस्तदीप्सितम् ॥६१॥

गुणैर्जगन्मोहन ! भीरुवल्लभ !
सखीगुणैस्ते सुखमेतदद्भुतम् ।
प्रसादमिन्दोर्भुवने कमन्दिनः
तनोति खद्योततनुद्युतिः किमु ॥६२॥

सुहृत् प्रियप्रेमकथासु, सज्जनः
सदा सदालापकलासु केशव ! ।
क्रियासकाशेषु गुरुः, सखीजना
वधूर्भवन्तं शयनेषु चेच्छति ॥६३॥

शिशिक्षिषुस्त्वां गुरुमस्तकं रिपुः,
शिशुं स्वपूर्वो जन, आर्त्तिमान् बलम् ।
मुनिः परं ब्रह्म, मनोजमङ्गना
प्रपश्यतीयन्तु पुराणगाथिका ॥६४॥

सदा भवन्तं शशिनश्च पर्वणः
जगज्जनोऽयं निरपेक्षमिच्छति ।
सुदुर्जयाद्दन्तुरजन्तुयौवनात्
कुतोऽबला त्वां चकिता चरेत न ? ॥६५॥

वधूः प्रियं प्रायश एव बालिशं
स्वनिर्भरोपेत्य चिरं विषीदति ।
प्रतानिनी स्थाणुमुपाश्रिता लता
निजाङ्गभङ्गेन विधृत्य वर्द्धते ॥६६॥

चिरं कुमारी भवने भवत्वसौ
ददातु वैधेयकरे करन्तु न ।
सरित् सरस्वन्तमनाप्य शुष्यतु
वरं पदभ्यामपि मा मरुं गमत् ॥६७॥

प्रियां न भर्त्ता यदि भर्तुमीशिता
निवर्त्ततां माहगितुं करं पुनः ।
न चेदशक्यद्विनिधातुमात्मनि
किमभ्येप्यत्तटिनीं तदाम्बुधिः ॥६८॥

रसेऽमृतम्, चक्षुषि चन्दनाञ्जनम्,
सुधा च वाचि, त्वचि दक्षिणानिलः ।
घनीकृतं शर्म च मानसेऽमले
परस्परं राजति दम्पतिद्वयम् ॥६९॥

अदृष्टमस्पृष्टमदृष्टसम्भवं
विलक्षणाकारमिदं विदेशगम् ।
परस्परं पाणिनिपीड़नात् परं
मनोकमैक्यं व्रजतीत्यहो विधिः ॥७०॥

स्वयं पतन्तीं स्वकरे सखीमिमां
कृपानिधे ! नः कृपणामुपाश्रय ।
विलोलवल्लीं विटपावलम्बिनीं
प्रसत्प्रसूनां विटपी जहाति किम् ॥७१॥

यथा प्रियप्रेमपरा स्वयंवरा
वराङ्गनान्या ललितापि नो तथा ।
यथा निदाघं प्रणिहन्ति दक्षिणः
तथा जलार्द्रीजनितोऽपि नानिलः ॥७२॥

विशाललावण्यजला मुखाम्बुजा
समुन्नमद्यौवनपूरशालिनी ।
कुचोर्म्मिका सुभ्रमहोभ्रदुन्नता
सुदक्षिणा दृक्शफरी सखीसरित् ॥७३॥

अनन्तमक्षुब्धमगाधमव्ययम्
अलङ्घनीयं कमलावलम्बितम् ।
स्वमन्यकेभ्योऽप्यमृतप्रदायिनं
सशङ्खकं कृष्णनिधिं धियासरि ॥७४॥

सहोदरात्वादरदित्सितापि सा
न चेदिनाथं यदुनाथ ! नाथति ।
विना न वेदेन हि धर्मसंहिता
समाहितार्था पदव्याश्रमृच्छति ॥७५॥

सुपक्वरम्भामिव स प्लवङ्गमः
इमां समायादभिलाषुकः सखीम्।
यतिष्यतेऽप्येष नितान्तमन्ततः
न चानभिज्ञो निजयोग्यताज्ञता ॥७६॥
असौ तु पूर्वेण नवां वनीमिमां
तदम्बिकामन्दिरमौलिरीक्ष्यते।
मणित्विषा यत्र प्रदीपविभ्रमं
विधाय चूडा नव सञ्चकासति ॥७७॥
आलिः सहालिरमुना चलितार्धनान्ते
सायकाले कलिकलैः कुमुदे यथा स्त्रः।
सौदामिनीमिव घनो घनलोकमध्यात्
अङ्कं नयन् हर हरे! तिलकाङ्कितान्ताम् ॥७८॥
अयो मयकलङ्कितः समपचीयते चासिते
जलमकृतिपङ्कजं शिशिरलुप्तसर्वं प्रभम्।
कलङ्करहितं समं प्रकृतिचेति यस्तत्प्रभं
प्रत्यपति विलोकयन् परमभीहरत्वं भवान् ॥७९॥
कामं कामाभिलाषात् सुरसरसगिरः कर्णमस्याङ्गनाभ्ताः
स्वान्तं तान्तं नितान्तं नयनमतरलं कान्तितयाहरन्त्यः।
आकर्ण्यौत्कर्ण्यमन्तःसरणि घनरवं मन्दगत्यन्दनस्य
स्वान्त्यायाः परिणामवर्गतिविहितौत्कण्ठमस्योपकण्ठात् ॥८०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
सखीसंलापो नाम दशमः सर्गः ॥०॥

# एकादशः सर्गः ।

—:०:—

आनन्दकन्दलनिरस्तसमस्ततापं
नानानिनादमधुरीकृतवेणुनादम् ।
सप्तस्वरग्रथितविकस्वररागरम्यम्
छन्दं ददच्छदचिरादभिगीतगीतम् ॥१॥

प्रस्पष्टवर्णनिकरं रविनिश्चितार्थैः
कोलाहलैर्विकलितश्रवणैर्विशालैः ।
लोकाकुलीकृतमदो नगरं गरीयः
चञ्चत्तरङ्गमुखरं जलधिं जिगाय ॥२॥

वाद्यं प्रवादयितुमुद्यति वाद्यकारे
निःशेषिकं तमनुधावति सार्थसार्थे ।
संस्रस्यमानवसनं शिशुको जनन्या
सुखभरं निरसरत् करदत्ततालम् ॥३॥

सौधाङ्गने चरति चारुकलाकलापे
आकल्पकल्पितरुचामबलावलीनाम् ।
यूनां पणायितुमिवोत्कलिकां चिराय
रूपापणः समजनि स्वमनोऽनुरूपः ॥४॥

दीपावलीविनिहतं तलिनं तमिस्रं
निघ्नत्रियामिव दिनं विदधत् सुधूपः ।
स्त्रीपुंसयोः पुरसदोः प्रमदप्रवाहैः
सर्वोच्चकैरमियतन् चपलेव रेजे ॥५॥

बालान् विलोलललितान् हरती बुभुक्षा
यूनः सुवेशरुचिरान् सुरसान् रिरंसा ।
प्रौढानवश्यकरणीयपरान् चिकीर्षा
जीर्णांश्चकप च यथासमयं सुषुप्सा ॥६॥
सम्मिविंशीथपिशुनो घनसान्द्रमन्द्रः
साकं तदुत्सवमहालहरीविरत्या ।
शङ्खस्वनः समभवत् स्वपदादिनिद्रान्
उत्थापयन्नपि च जागरयन् प्रसुप्तान् ॥७॥
तत्राङ्गने युवतिराजिविराजितायाः
कुन्देन्दुसुन्दरतमस्मितपूर्वमेकः ।
दृष्टिं विवर्त्तिशफरीस्फुरिताक्षलोलां
भ्रूविभ्रमादलभत प्रणयी प्रियायाः ॥८॥
स्वैरस्वनं मशकसारणकं तयेन
निर्माय हर्म्यगमिनीं विमुखीमखिन्नाम् ।
बद्धाञ्जलिः परममञ्जुलताविलासां
कान्तां न्यवीविददरं रतिदैन्यमन्यः ॥९॥
धीरोऽपि सम्मुखगतां दयितामधीरः
साङ्गोऽपि कान्तिविभवैः प्रचरन्ननङ्गः ।
दृष्टेव दक्षिणतमामपि कोऽपि वामां
दीप्त्या सलक्ष्यनयनः प्रजहार पुष्पैः ॥१०॥
फुल्लत्सहासशयनं चपलाधिपस्य
मोचैः सखीः प्रियगुणं चिरमामनन्तीम् ।

चेलाञ्चलं निभृतमेत्य विलम्ब्य कश्चित्
निश्चिन्वतीं स्तमलमप्रतिभामकार्षीत् ॥११॥

स्वाम्बाङ्कसङ्गतमयो दधतीं स्वमङ्कं
वृद्धाङ्कलग्नमतिकामिव कोऽपि कान्ताम् ।
दीपादधः स्थितवतीं विरलान्धकारे
तूष्णीमवोचदुचितं स्तनदत्तहस्तः ॥१२॥

कश्चित् प्रियां विजनवृत्तिमिदं ललाप
मुग्धे ! स्वयं प्रमशुतामयमुत्सवः कः ।
शय्याऽङ्गनं मनितगीतिरलङ्कृतीनां
वाद्यञ्च नौ हि नटनं सुमहान् महोऽयम् ॥१३॥

विस्रब्धमालिलपिताम्रसमापिबन्त्याः
मन्दागतप्रियगृहीतकराम्बुजायाः ।
सम्भ्रान्तिजातपुलकं भयविह्वलत्वं
निर्वर्ण्य तं परिणतं महति प्रमोदे ॥१४॥

सौर्य्यत्रिकीं मधुरतां प्रयतौ स्मरन्तौ
पश्चादुपेतपतिना विहितद्विनेत्रा ।
स्वैरं शनैश्च करमस्य करेण धृत्वा
जानन्त्यजोहसदमुं व्यहसीत् स्वयञ्च ॥१५॥

त्वां वल्लभामिति बलादुपगूह्य गुह्यान्
नैषेत्यवेत्य च पलायत तूर्णमन्यः ।
सखीव विस्मिरविधूतदला वयस्या-
चेलाञ्चलं धृतवती युवतियकम्पे ॥१६॥

संलापलोलमनसामबलावलीनां
पश्चात्कृतैरभिगृह्य दयितां व्रजन्तीम् ।
पार्श्वान्नटमिव नटः सुपटुः समेत्य
गण्डे चुचुम्ब चलकुण्डलतुल्यवर्णे ॥१७॥

उत्क्रम्य मोदविमनीकृतलोकसार्थान्
प्राङ्मेलनाद्युवजनाः प्रमदादमाद्यन् ।
प्रारम्भतोऽतिमहतः पुर एव बीजं
पूर्वं हि पूजनविधेरधिवासकर्म ॥१८॥

पूर्वं प्रमत्तृतिषलस्तनवो नवोढ़ाः
नात्युत्सुकाः सकुतुकास्त्रपिताः किमोर्थैः ।
मानन्दनान्वितधियश्च परास्तरुण्यः
मन्दं प्रखेलनभरश्च ययुर्गृहाणि ॥१९॥

प्राजन्मयोगपरिशीलनया मुनीनां
यो योगबुद्धिरुदगात् कियती जड़ानाम् ।
सन्त्यज्य हन्त भगवत् किमुदाररत्नं
प्राप्नोत् सुखं प्रभवतीन्द्रियवृत्तिरोधात् ॥२०॥

संसारसाररससिन्धुषु यद्यमज्जयन्
वैराग्यमार्गमृषयो न तदाऽगमिष्यन् ।
द्राक्षारसं रसयितुं रसवित् समर्थः
चिन्तां किमर्थयति कश्चन वालिशोऽपि ॥२१॥

रत्नान्ययत्नसुलभान्युपलिप्ससे चेत्
किं दूरतो मृगयतां तरुण ! स्वगेहे ।
सन्त्यत्र नीलमणि-शेवधि-चन्द्रकान्ताः
कान्तेक्षणस्तनयुगाननकैतवेन ॥२२॥

कान्तं विलाससलिलं शयने शयानं
वीक्ष्यावगुण्ठनवतीं विनिवर्त्तमानाम् ।
आपूर्य सस्मितमुखीभिरलीव खिन्नां
बाह्यात् सखीभिररं निगडेन रुद्धम् ॥२३॥

उत्थाय भिसितमुलग्नतनूरमूनं
श्लिष्टा प्रियेण चकितेव निजाङ्गलीना ।
बालाकुलाऽननुगुणा भुवि कोपमास्त
किं स्विद्ददीत कलिका मधु षट्पदाय ॥२४॥

नीतेऽवगुण्ठनपटे मुदिताक्षियुग्मा
निःस्तेऽधरे नतमुखी, रुदती समुक्ता ।
आलिङ्गिते वपुषि सङ्कुचिता च कान्तम्
अध्यापयन्तमिव मूढमतिस्तताप ॥२५॥

तन्वन्तमन्तिकगतं पृथुबाहुपाशं
अद्रष्टुमिष्टमलमुद्यतदण्डभीमम् ।
कार्य्यानुसारकृतदुःखसुखं दिधीर्षुं
कान्तं कृतान्तमिव पश्यति बालवामा ॥२६॥

संध्यानदेहलतिकामणुलब्धमित्त्वां
हारोपमां भुजयुगेन गलावलम्बाम् ।
अङ्केन सस्मितमुखीं शयनं वहन्तम्
अवापयद्धरिमुं हसितं सखीनाम् ॥२७॥

चोलुम्ब्यमानवदना दयितं चुचुम्ब
सासज्यमानकरणा च मनाक् समङ्ग ।
उत्सादिनी किमपि सिध्यति न प्रयत्नात्-
सम्मर्दितात् सुरभिरेत्यपि कर्णिकारात् ॥२८॥

चेलं हरत्यमखिन्नं पुलकाञ्चिताङ्गी
रत्नाग्रमन्तरगतं निसिषेध नैषा ।
कालं कियन्तमबले खलु भीतिलज्जे
भावेन भीषणभटेन नियोद्धुमर्हे ? ॥२९॥

रोमाञ्चसञ्चिततनुं रमणं वसन्तं
पुष्प्यत्कदम्बकलिकेव नवीनभृङ्गम् ।
मन्दं शिरो विधुनती विनिवारयन्ती
सञ्जातयौवनदयिता क्रमशः पुपुञ्ज ॥३०॥

पश्यन् गवाक्षविवरादनयोर्विलासम्
आलीगणो विकृतिमाप नितान्तमन्तः ।
चिन्ता परेण हि परं
प्रादुष्करोति परकी

सख्यो सहाह्ववपदे सति सन्धिबन्धे
गाढ़ोत्सवात् प्रथमदीक्षितयोः सवेऽस्मिन् ।
आरिप्सितं सुमनसः खलु दक्षिणार्थम्
आकीर्य धैर्य्यविधुराः स्वमवाप जग्मुः ॥३२॥

उत्कर्णमुत्कमनसो मनसि स्थितस्य
नृत्यत् स्वकीयगमनेन विशालनृत्यम् ।
कर्णे स्वनूपुरयुगेन च शिञ्जितानि
पत्युर्विसोढ्य भवने समगात् किशोरी ॥३३॥

आमस्तकात् स्तनयुगावधिवर्त्तिचेलात्
अन्तःस्मितां निजमुखाम्बुजमापिबन्तीम् ।
धम्मिल्लकुसुमसौरभलोभनीयां
द्रागुत्थितः प्रियतमो दृढमालिलिङ्ग ॥३४॥

उच्चुम्ब्य काममधरन्तु तदेकमस्याः
संश्लिष्य गाढमसकृत् सकृदेव तच्च ।
आसाद्य दुर्लभमिदं समचिन्ति तेन
नो संख्यया विनिमयोऽपि तु तारतम्यात् ॥३५॥

शीत्कारभिन्नदशनच्छददंशिनापि
निष्पेषिणापि कुचकोरकयोर्नितान्तम् ।
प्राणप्रियेण विदधेऽङ्गसङ्गमे तयोः
धन्यो मनोजमहिमा हि महान् विचित्रः ॥३६॥

नीवीं प्रिये सपदि मुञ्चति चञ्चलाक्षी
रोमाञ्चकञ्चुकितदेहलता विलोला ।
मामेत्य वाच ममसाल्यु रीचकार
चेलं चकर्ष च करेण मुमोच चास्यम् ॥३७॥

आच्छिद्य प्रच्छदपटे निहिते धरण्यां
पर्याकुला सपदि पर्यहृतदृयदा सा ।
तस्याः प्रहस्य करियुग्मकरौ सकुम्भौ
रेजे तदोरुयुगलं मनिसम्बबिम्बम् ॥३८॥

दूरे प्रहाय निजमंशुकमेप तस्याः
शंसद्वयोपरिगतेन करद्वयेन ।
आच्छाद्य चारुचुचुकौ परिरभ्य पश्चात्
गण्डे प्रचुम्ब्य च कियत् घटकर्म चक्रे ॥३९॥

सद्यस्त्रपां विजहती प्रजहार कान्तम्
आहत्य वक्षसि कुचद्वितयेन भूयः ।
नव्योदये मति हृच्छतरुणीहरिण्योः
कण्डूयनं कुचविषाणयुगे हि दृष्टम् ॥४०॥

अन्योन्यमाचकषतुः सुभृशं तयैमौ
अन्योन्ययोर्विविशतुर्नितरां ययोरः ।
एकं दृयच खलु तत्र तयोर्विरोधि
कस्मात्स्वकस्वपि भवेत् क्वचिदन्तरायः ॥४१॥

पादाग्रयोरधरयोरुरसोश्च दोष्णोः
संयोगमद्भुततमं क्रमशो विलोक्य ।
केलीकलाऽभिनवदीक्षितयोररोदीत्
स्वेदच्छलादिव वियोजितपृष्ठयुग्मम् ॥४२॥

बिम्बाधरौ परिपिबन् विदलय्युरोजौ
पादौ दधच्च युगपत् प्रपदद्वयेन ।
तस्याचलाचलतनुः स रिरंसमानः
स्तब्धं पिबन्तमलिनं नलिनीं जहास ॥४३॥

निघ्नमनोजजवनानिलचञ्चलायां
मामाद्यपूरसरिति स्तनसैकतायाम् ।
उद्दण्डनायकतनूतरणिः सवेगं
शश्वन्मुहुश्च निममज्ज समुन्ममज्ज ॥४४॥

ये चित्रमत्र रतनर्मणि यौवतस्य
वेशे गृहे च शयने परसम्भृतौ च ।
या मन्मथो भवति या च महाट्टमोह
ताभ्यां महाय तु महानवमो विराय ॥४५॥

पश्यन्तमुज्ज्वलरुचिं रुचिरं युवानं
नाथं विलोकितवती युवतिः सहासम् ।
पेयं पिबन्त्यपि तृषाविरतिं न लेभे
स्वेदप्लवेऽपि विपुलं पुलकं बभार ॥४६॥

चित्रप्रसाधनघनायितदर्शना सा
भासा स्वया हृतशयाहितदीपहेतिः ।
ताम्बूलसंवलितबालमृणालपाणिः
सत्त्वं जगाम सरया त्वरया स्वगेहम् ॥४७॥

सद्गन्धिपुष्पविशिखैः प्रहितैर्युवानौ
उद्वेजितुं पुरत एव मनोभुवेव ।
विष्वग्द्रुतं सुरभिमाररसैश्च सिक्तं
पश्यत्सुखश्रयणीयतलं सुलोके ॥४८॥

अन्योन्यमक्षियुगले नियते स्थितं यत्
लावण्यतो विविदतुर्न तु तस्य मर्म ।
ज्ञात्वा न किञ्चिदपि सञ्चितदृष्टिभावौ
ईदृङ्ननन्दतुरुभौ न तथा कुतोऽपि ॥४९॥

हस्तान्तरावपि निरन्तरतां प्रयातौ
सद्यो हि मध्यमसमध्य च माद्यतः स्म ।
दोषाकरः शुचिकरो भवतीह येषां
तेषां नवीनवयसां नहि किं विचित्रम् ॥५०॥

दन्तच्छदं रमयितुर्नितरां निपीय
रम्यं प्रफुल्लवदने क्रमुकं ददौ सा ।
दष्टाधरा पुनरितस्तनुखण्डितं तत्
आसीत्सदश्च रसनादशनावकाशे ॥५१॥

राजीवजेन रचितं रतिमन्मथाभ्यां
नैवेद्ययुग्ममिव सप्तमसर्गकायाः ।
वक्षोजयोर्युगमसौ कृतदानमुद्रः
ताभ्यां निवेदयितुमस्पृशदङ्गनायाः ॥५२॥

आस्वाद्य वीक्ष्य च घनं कठिनञ्च पीनम्
एणीदृशः कुचयुगं मलयस्तुतीव ।
नो पेटयुगं भुवि भवेदनयोः परस्मिन्
एकस्य तस्य न तुला युवतेस्तदा स्यात् ॥५३॥

संस्पृश्य शीतचुचुकं गुरुमाप तापं
उत्पीय पूर्णमधरं नितरां ततयं ।
आबध्य बाहुलतया दयितो युवाऽसौ
लब्ध्वा सितस्मितरुचिश्च बभूव रक्तः ॥५४॥

श्लेषं मुहुः सरसतो बहुगाढबन्धं
प्रायोऽप्यलङ्कृतिमनोहरगन्धशोभाम् ।
सद्रसिकं युवयुगं युगपद्विधाय
काव्यस्य सुष्ठु महतस्तुलनामधासीत् ॥५५॥

मध्योपवेशिरमणाधरपानकाले
तत्कण्ठगाद्भुजयुगादवनीस्थितायाः ।
प्राक् सप्तमं शुकमुपांशु कटीप्रदेशात्
प्राप्तं भुवि क्षपितयेव श्रिया विलोमम् ॥५६॥

पूर्णं ततो नवरसस्य जगत्प्रतृप्त्यै
न्युब्जीकृतं सुविकचं कुचकुम्भयुग्मम् ।
आलोक्य लोलमनसा सहसा सहासं
तत्पातशङ्कितया पिदधे कराभ्याम् ॥५७॥

आसीदसौ प्रथमतोऽस्य विधिप्य मिथ्या
विद्यां गताद्य तु रताभवत् किलोर्द्ध्वैः ।
उन्नत्यधोगतिविधौ नियतं नियन्त्री
वाच्छैव यद्भगवती जगतां जनस्य ॥५८॥

नग्नं तदाखिलमनङ्गवशा स्वमङ्गं
निर्वर्ण्य पत्युरपि सा वसनं निरास ।
जायापती व्यवहृतौ सदृशौ भवेतां
किं गोष्पतेर्गिरमिमामियमन्वधावत् ॥५९॥

अङ्काय निह्नुतकलालपितान्ततः स
उत्तानसुप्तमवपुर्विनिधाय शिश्ये ।
तस्मिन् पतिप्युरबला विकसद्विहासा
सा पद्मिनि प्रशुशुभे स्फुटपद्मिनीव ॥६०॥

आकाङ्क्षया सकलयोग्यतया च युक्ता
नित्यप्रसादमधुरा प्रियरीतिवर्णा ।
शास्त्रीव चारुरचना दयितोरसीयम्
आसत्तिमाप परमामुरसा निजेन ॥६१॥

उत्तानशायिनि नवे तरुणीजनेऽस्मिन्
यूनां चिरादुपरि सन्तरतामगाधे ।
मध्याविवोच्चपुलिने धृतमीनचिह्ने
पीनोन्नतौ घनकुचाववलम्बनाय ॥६२॥

नीचं गतस्य रमणस्य निराश्रयस्य
तावेव पाणिविधृतौ परमाश्रयौ च ।
सिन्धुं गतस्य पृथुवेगपरिप्लवस्य
कूटाविव क्षितिभृतो नतिहस्तलभ्यौ ॥६३॥

दीनाश्रयः श्रयति यौ समदं रिरंसुः
शुष्काननः पिबति यौ च शिशुः पिपासुः ।
दृष्ट्वा च हृष्यति यतः सकलोऽबला तौ
स्वार्थं विना गुरुकुचौ दधती हि धन्या ॥६४॥

नास्मि स्तनौ न च विलम्बितकेशपाशः
दूरं गिरो यदभृता बिभ्रयादियं मा ।
मान्द्यं गतेत्युपरिगा विपरीतरत्यां
वामाः किलात्र सुरतं सुरतेऽतिवामाः ॥६५॥

मन्दोष्मकाममधुरा विधुराऽधरस्य
पाने रते च समुदीर्घतरप्रियेण ।
स्वौष्ठस्थितेर्नियमतः स्वमुदीर्य कण्ठं
प्राग्वासिता प्रियतमा निपुणेन तेन ॥६६॥

आकुञ्चितोरुयुगले स्तनितम्बबिम्बं
पश्चात् प्रविभ्रति करद्वितयेन गाढम् ।
वामा प्रिये निजभुजौ विसवद्विधाय
ममौ जलौघ इव पाकघना ननर्त्त ॥६७॥

कान्तश्चुचुम्ब चुबुके, ललना कपोले
वस्तिं समस्य तरुणी, तरुणस्तदूरू ।
एकोत्सवान्तशयितं पुनरप्यनङ्गम्
अन्योन्यमीदृशमिमावुददीपयाताम् ॥६८॥

क्वचिदज इव पश्चात् सम्मुखः क्वापि चोर्ध्वः
क्वचन च शयितः सन् क्वापि चासीन एषः ।
रमणपरमदक्षां कान्तिकान्ताश्च कान्तां
स्वसदृशकृततृप्तिं तोषयामास तुष्यन् ॥६९॥

फुल्लं मन्दं मलयपवनो व्याधुनोत् पुष्पजातं
पुष्पात् पुष्पाद्दिशि दिशि महासौरभं पर्य्यगच्छत् ।
केशे वेशे नवयुवतयः सौरभं सत्यगृह्णन्
तस्यां नव्या निशि समवसन् या युवत्यां युवत्याम् ॥७०॥

साङ्गोपाङ्गमनङ्गमुत्सवविधौ सम्भाव्य नव्या जनाः
केलिक्लान्तनितान्ततान्तकरणाः श्रान्ताङ्गनालिङ्गिताः ।
शृण्वन्तश्च निशानिशेषपिशुनं शङ्खस्वनं शोभनं
मान्द्रस्यन्दनमन्दमन्द्रमिलितं द्रागेव निद्रां ययुः ॥७१॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये सम्भोगशृङ्गार-
वर्णनो नाम एकादशः सर्गः ॥०॥

विशति शनैः सलिलं गलशेषं
जननिकरे परिकर्षति जालम् ।
विचकितरोहितका इव धानाः
सपदि विपुप्लुविरे प्रतिकूलम् ॥५॥

अचलनलोचनमूर्त्तिरटोऽपि
जनतुमुलाद्विसृते प्रतितिष्ठन् ।
क्वचन बकः परमैकविलक्ष्यः
मुनिरिव लब्धसबीजसमाधिः ॥६॥

शिशुशफरीं दधतं कलविङ्कं
वदनपुटेन मुदा विकषन्तम् ।
नभसि जयन् करटोऽपजहार
नहि बलवान् सदमर्द्दिविनक्ति ॥७॥

उपपुलिनस्फुरितं शिशुमीनं
सरभसमेत्य पतन्तमरिष्टम् ।
द्रुपदसुतान्वितसिन्धुमहीन्द्रं
परकरटोऽनुययाविव भीमः ॥८॥

स्थिरनयनभ्रमिभिः समयानैः
परिपतनैः सहसाक्रमणैश्च ।
विहगगणो गगनोपरि राजन्
अकरु सरस्सुसुनं घनराजी ॥९॥

पथि परितः परितस्तरिरे गां
प्रसृतचिरे रुचिरेऽपि च कूले ।
क्षितिविकले विकले सलिले च
जनविसरा विसराजिनि केचित् ॥१०॥

वसनतले पृथुले पृथु रोमणि
चलति भृशं चलितं सहशङ्कम् ।
विजनपथेन पटच्चरमारात्
नृपतिचरः प्रजहार विधृत्य ॥११॥

क्व तनुतमा जनभोजनलब्धिः
क्व तनुमताञ्च वधः प्रचुराणाम् ।
परमणिपूर्णलवैर्वि मतीनां
निजनखभाजनमेव न चित्रम् ॥१२॥

सुचिरचलाचलमीनमसृदगं
पुरि गलग्रो नृपतेरुपनीतम् ।
पतिमलिनापसदी पद्मनाम्नि
प्रमदवतीव ददौ यमदूतो ॥१३॥

अधरविकासि यया निरटष्ठीतः
झटिति सहस्वरदः करशाखाः ।
उरु विदशन् विजहेऽथ कयाचित्
विधुवति कः प्रतिशैत्यममयं म् ॥१४॥

धृतफणजो हृहसौ हटपुच्छ-
परिधुननैर्विनिनाशयिपन्त्याः ।

दधि विचकार च भक्ष्यनिकायं
आपनपरोऽप्यसुचत्र समीका ॥१५॥
क्वचिदधिवैषवखण्डगणिक्यं
स्फटिकघनानि दधीनि दधानाः ।
सुसदृशगोपजना विशिखायाम्
अभिपतन्तो मनुजानतिपेतुः ॥१६॥
ललितचतुर्विधभोज्यपदार्थान्
नृपभवनानि बहून्युपनिन्युः ।
समवहिता हितकर्मणि राज्ञः
पुरु पुरुषाः प्रतिवस्तु ररक्षुः ॥१७॥
त्रिविधमगान यथेप्सितमन्नम्
अललितमप्यलमेव ददस्व ।
अपि वसुधेशवसूनि गृहाण
स्वमतिमतानि तदा मतिमन्तः ॥१८॥
सुभगतया तुलिता किल कन्या
तदुपमिता नृपमानमहत्तिः ।
इदमनुरूपतयातिमहः सः
तदनुगुणश्च जनागम आसीत् ॥१९॥
अथ विपदः पदमेव भविष्यत्
किमपि विशङ्क्य कलङ्कनिदानम् ।
प्रतिविदधे पुर एव स रुक्मी
साहसगमो नहि किं प्रयतोऽफलम् ॥२०॥

न तु विविदुर्विदितागतिकन्या-
पुरविपिने हरिमद्रिगुहावत् ॥२६॥
सहगुलिकं नलिकं सुविशालं
पिठपतितर्जनिकामिव बिभ्रत् ।
निजपरिलोकनमात्रविभीत-
व्यपसृतलोकमलोकि च लोकैः ॥२७॥
अनिलविलोलनिचोलनिगूढं
नवललनोरुसमीक्ष्य बभूव ।
कनकगदामिव कोषनिविष्टां
कुसुमशरस्य भयाज्जड एकः ॥२८॥
अतिचकितः परितः परिपश्यन्
असिमुपवेश्य च चर्मणि सद्यः ।
गणतरुणीमभितः समुपेतां
समलपदोषदभीप्सितमन्यः ॥२९॥
अयनमुपागतमीशनिविडं
शकटमतीत्यमलं प्रतिविध्यन् ।
विचकितसृतग्रहीतधनः सन्
अनुससृदे गमनाय च कोऽपि ॥३०॥
चतुरतमोऽथ चिरन्तनसेना-
पतिरसकृत् समितिप्रणिधायी ।
तुरगगतोऽखिलसैन्यततीनां
समवदधे सकलं किल तत्त्वम् ॥३१॥

अथ तुहिनाद्रिगुहामिव पूः
सुरसरितः पुरमुच्चगभीराम् ।
निजनिजचिह्नचितो रथवारः
सधृति विवेश विशेषसुवेशः ॥३२॥

सपदि पदा पुरगोपुरवर्त्ती
विनयनयो मतिमानपि ककौ ।
करयुगलेन रथस्थितिमात्रम्
अदधत रश्मिमशान्तहयस्य ॥३३॥

विदितपरस्परवै भवमानौ
युगपदुभावपि नेमतुरेतौ ।
भवति समानगुणः समनम्रा
कियदुदिता तु तुला लघुताभाक् ॥३४॥

नृपतिमनामयमाप्तमनाः सन्
अपि शुभमागतमित्यपि पृच्छन् ।
कमपि नियोज्यममुष्य नियोज्य-
परिपदमैरिरदेव विशिष्टाम् ॥३५॥

पुरमुखतोरणनिम्नविभागे
विशति रथे जनसङ्कुलदुर्गे ।
द्रुतमवतीर्य च पृष्ठचरेण
सतिरुदसारि पयो विमनस्का ॥३६॥

ललितलयान्वितदुन्दुभिवेणु-
मुरजमुखध्वनितं कणगोऽय ।

अरणितमुच्चकैर्वणैरतिदूरात्
अवहितपौरजनैरनुभूतः ॥३७॥
स कलकलः क्रमशः सविधः सन्
समसुलभां गुरुतां लभमानः ।
समसुरभा दुहितुः क्षितिपस्य
नगरमकम्पयदाहितमोदम् ॥३८॥
स जनगणः स्फुटतामुपगच्छन्
अनवरतध्वनिभिः स्तुतियुग्मम् ।
नवनृपतेर्वचनैऽतुलवैद्यैः
प्रमदरमैश्च मनः प्रपुपूरे ॥३९॥
अथ पृतनां सकलो विलुलोके
महितमहेभगताङ्कपताकाम् ।
मकरवतीं तपनातपदीप-
तरलतरङ्गततिं तटिनीं वा ॥४०॥
अविकलपूर्णरुचिः स्वगणेन
सदृशरुचा च वृतः सुमहार्घैः ।
स्रज इव मध्यमणिः शिशुपालः
समुचितसूत्रधरः समुपागात् ॥४१॥
स विपुलमण्डनमण्डितमूर्त्तिः
नवनृपतेरकरोदतिरागम् ।
स्वयमधुना च वहन् गुरुभारं
व्यधित नतानि शिरांसि परेषाम् ॥४२॥

विधुरिव पूरयति चिरमुद्यन्
जलधिजलं कियतीमपि नाथाम् ।
समुदित एव स भीष्मकसूनोः
युगपदपूरि मनः पुनराशाः ॥४३॥

सविधमुपेयुषि चेदिनरेन्द्रे
पृथु तरसि ध्वनिनादितसैन्ये ।
सपदि विदर्भपतेरपि स्पष्टाः
प्रतिजगृहुः प्रतिनादकृतस्तम् ॥४४॥

शिशुललनाजनमुद्विजमाना
समुदितवीरमनो मदयन्ती ।
प्रतितुदती श्रवणञ्च नराणाम्
असकृदगर्जदनेकशतघ्नी ॥४५॥

गमनवतीं महतीं वरसेनां
प्रथमसमज्जितरुक्मिचमूः सा ।
अभिपतितां तटिनीव तिरश्चीं
सकलकलं सरितं ससरंहात् ॥४६॥

अगणितलोकगणान्तरयातौ
निजरुचिवीचिचितचारुमरीचौ ।
अधिसरणि चेदिविदर्भनरेन्द्रौ
विमलमणीव शुभं शुशुभाते ॥४७॥

परमवलोकयतः शिशुपालं
धरणिपतेः प्रमदो हृदि यावान् ।
नृपदुहितुस्तु जनाच्छ्रुतवत्याः
तदधिक एव बभूव विषादः ॥४८॥

प्रमदिहृदोरितरेतरमूर्त्तौ
अभिगमनाय परस्परपाणी ।
विरचयितुं रभसादिव सेतुं
दधतुरुभौ पुलकाञ्चितदेहौ ॥४९॥

अविरलमालपतोर्लिलितां
दशनसितांशुततेरभितोऽपि ।
उपरि विलोलविलोचनभृङ्गं
वदनसरोजयुगं प्रचकाशे ॥५०॥

समितिसमीपमुपेतमथाशु
सुरभिसमेतमनोजसमानम् ।
युगपदवेक्ष्य ससम्भ्रममाशु
मदसिसदः सदसः समुदस्थुः ॥५१॥

पटलतलात् प्रहिता वनिताभिः
धृतरजतातपवारिणि लाजाः ।
स्थितिसमयाविदिता जनासर्यैः
प्रविविदिरे परितो निपतन्तः ॥५२॥

नरनिकराः प्रचुरं जयशब्दं
द्विजनिगणाः परमाशिषमस्य ।
नवललना अतिसाधुगिरश्च
प्रति शिशुपालमजस्रमकार्षुः ॥५३॥

ललितसलाममणिप्रचयेन
विरचितमासनमेव समेत्य ।
उदयशिलोच्चयशृङ्गमिवेन्दुः
सुचिरमरोचत राजसमाजे ॥५४॥

नवविपणीतरुणीगणपाणि-
विचलितचामरचञ्चलचूडः ।
अनिलविलोलशिरोलतिकालिः
परिषदि मेरुरिव प्रदिदीपे ॥५५॥

मणिमयमण्डनविम्बितदेहान्
कुतुककृतस्मितशोभिमुखाजान् ।
पृथु पृथुकान् प्रवहन्नभिहस्तान्
स्फुटमभवत् स तदा शिशुपालः ॥५६॥

ललितविकस्वरसुस्वरशाली
महदभिनन्दितवन्दिसमूहः ।
पिक इव पञ्चमगो मधुमत्तः
नवनवगानगणैरनुवत्सम् ॥५७॥

अविरलपङ्क्तिगतैर्जनवर्गैः
विततवितानचयैश्च दिनेऽपि ।
क्षणमभवत् क्षणदाभ्रमकारि
सतिमिरमङ्गलमाकुललोकम् ॥५८॥

सदसि च चेतसि चोपगतानां
सपदि सुहासमदुर्वहदीपाः ।
सह सुतया जरतः क्षितिभर्त्तुः
घनतिमिरं तदगाच्चलचित्ते ॥५९॥

स्वसुखसमुदीर्णधिये विविधासु
क्षतिषु सतीष्वपि रुक्मिजनानाम् ।
स तु विषसाद हृदा शिशुपालः
पिशुनयते स्वमनो हि भविष्यम् ॥६०॥

भूयिष्ठभूषणविभूषितमञ्जुमूर्त्तीन्
यामागतानिव निरीक्ष्य वरं दिदृक्षून् ।
सिन्दूरसुन्दरमुखी विरलान्धकार-
चेला विलोकितुमिवोपजगाम सन्ध्या ॥६१॥

परिषदि परिपूर्णं भूरिसम्भारभारं
समुदितवरलक्ष्मीराजितं चेदिराजम् ।
प्रमुदितमति पश्यन् भीरुसारां स्वसारम्
उदयितुमिह रुक्मी रुक्मिणीमादिदेश ॥६२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
शिशुपालागमनं नाम द्वादशः सर्गः ॥०॥

# त्रयोदशः सर्गः ।

——:०:——

अपरां भजन् दिनमणिः क्रमशः
विगतप्रभावमहिमा समयात् ।
अकरोत् प्रदोषमपि सन्तमसं
स्वयमस्तमाप च सतानुसृतः ॥१॥

नियतिं न कोऽपि जगति क्रमितुं
क्षमते विधूतपुरुषक्षमताम् ।
उपरि भ्रमन् त्रिजगतां नयनं
सविता विवेश चरमाद्रिगुहाम् ॥२॥

विलयं गते दिनपतावमहत्
जहती दिनद्युतिरपि प्रसनम् ।
विकलस्वना मलिनकान्तिकला
सहगामिनी समभवत् सहसा ॥३॥

उदयाचलं चलति चन्द्रमसि
नवतारका मृदुलहासमक्षतः ।
क्रमशः प्रतिम्बमिव वेदयितुं
प्रियमागमं समुदगुर्गगनु ॥४॥

सहचक्रवाकमिथुना नलिनी
सहकौशिका कुमुदिनी च तदा ।
ददृशे जहास च समायतना
न विभेदिधीर्भवति नित्यमतः ॥५॥

पुरयोषितां हुलुरवै रुरुभिः
शुभगीतिभिर्विविधनादचयैः ।
मिलितः कलः कलकलैः कलिलः
सहसावरोधनगराद्‌दगात् ॥६॥
सततस्वनैर्बधिरितश्रवणः
जनसङ्घयामतिसमीपजनः ।
तटिनीनिमग्न इव हस्तिकाणां
कियदन्वमात् कियदपि व्यशृणोत् ॥७॥
परमम्बिकासदनगामिस्थितिम्
अभिनिःसृतां नृपसुतां प्रविदन् ।
रणपारदृश्वपृतनामभि तां
झटिति न्ययुङ्क्त वसुधाधिपतिः ॥८॥
परिमुक्तकामितगिताभिधराः
पथिपार्श्वयोर्निपुणसैन्यगणाः ।
महदद्य तत्र परिरेफभृतः
समपङ्क्तयो हल इव द्विगुणाः ॥९॥
सुषमासमालियुगलान्तरगा
पदचारिणी सपदि राजसुता ।
मुखमञ्जरी किसलयानुसृता
नवकेतकीव सरणिं निरगात् ॥१०॥
ललनासु तामतुलनां ब्रुवती
परमाकृतिः सुकृतिजातकृता ।

उदिता समचमवलोकयतां
समजीजनन्मनसि तर्कमिमम् ॥११॥

इयमेव हन्त कमला विमलात्
स्वपदादधो हि कमलं कमलम् ।
अबुधान् प्रबोधयितुमर्थमसुं
सुचिरात्र, चारयति तत्र पदम् ॥१२॥

सुपदे स्थितान्नखविधून् दश तान्
विशदान् विलोक्य चिरचिह्नचितः ।
उपितः पराजयभयादपदे
विधुरेक एष किमु शून्यमगात् ॥१३॥

ननु वस्तुतस्त्वजड़ ! वाङ्निपुण !
कविसार्य ! निचिनुत कोपमितिः ? ।
समधर्मवत्त्वमिति चेत् कदलीं
ललनोरुणा तुलयतेह कथम् ॥१४॥

अमुनोरुणा प्रचुरतिप्रभुणा
मसृणेन तप्तकनककच्छविना ।
पशुभोगलक्षत् सुकठिना विरुचिः
कदली हि कुत्सिततया दलिता ॥१५॥

अथवा विजित्य जगतां त्रितयं
मकलं स्मरेण किल भीषयितुम् ।
निहितं स्वमन्दिरमुखे कनक-
गदयोर्द्वयं न तु तदूरुयुगम् ॥१६॥

यत उद्भवो मनसिजो जनिभू-
रभवन्मुखालियुवतोऽर्जगति ।
निजजन्मभूरुचिरतां गदितुं
स्पृहितास्यकार किमु वर्ण्यमिदम् ॥१७॥

अथवा यतः प्रभविता मदनः
मदनत्वमस्य किमु वाच्यमपि ? ।
जनयन्ति कारणगुणा हि गुणं
ननु कार्य्यवस्तुनि जगन्नियमात् ॥१८॥

रसनासनीकृतनितम्बयुगं
कनकाभमिष्टकचितं मसृणम् ।
सुतरामराजदिव काममरि-
दधिरोहिणीपरिगवेदियुगम् ॥१९॥

पृथु लोमतो नवनितम्बकुचौ
निखिला नुवन्त्यतितनुं न तु माम् ।
इति चिन्तयेव चिरसन्ततया
क्रमशो मनाकृशमभूदुदरम् ॥२०॥

परितो विजित्य जगति स्वजयं
कुसुमेषुणा किमपि विश्रमितुम् ।
कलधौतदुन्दुभियुगं निहितं
परिवर्त्य वक्षसि कुचौ न तु तौ ॥२१॥

सुतनुस्तनूरुहचयः सुतनोः
नतनाभितः स्तनगतः सरलः ।

भवने स्मरस्य च विहारवने
पदवी बभाविव गतागतयोः ॥२२॥
कमलं किलोपरि मृणालमधः
इयमेव रीतिरिति चेत् किमियम् ।
विचरन्त्यधोमुखचलन्नलिन-
द्वयवन्मृणालयुगलं वहति ? ॥२३॥
नवपल्लवो व्रजति पल्लवतां
मृदुलं न विद्रुमदलं विमलम् ।
सुरभं न बिम्बमपि वा न ततः
तुलना कुतो तदधरं मधुरं ॥२४॥
अतसीप्रसूनरुचि रक्ततमं
सुतनोः कपोलयुगलं ललितम् ।
निचितं भ्रमत् कनकचूर्णचयैः
पृथुलं प्रियालफलमप्यकरोत् ॥२५॥
न तुला तिलस्य कुसुमेन यतः
सुदृशो नसोऽतिविपर्ययेण समम् ।
विफलोपमा तदिह सा त्वमितः
वदनोचिता भवति येन तथा ॥२६॥
यदि दृष्टिगोचरमितावदने
परिणीतवति मयनता यदि वा ।
तम् तेन तेन च तदा विपुलम्
उपमीयतां नृपसुताननम् ॥२७॥

मृदुमानितम्बपतितं कुटिलं
कचहस्तमस्तनिजकेशरुचिम् ।
त्रपया विलोक्य चतुरा चमरी
समशिश्रियत् समजनामटवीम् ॥२८॥

सुतनोस्तनोर्विनिहिताभरणं
निखिलं तिरस्कृतिमिवाजनयत् ।
स्फुटसारवे सहजमञ्जुतमे
परिरञ्जनं खलु विरक्तिकरम् ॥२९॥

इयमेकला कुसुममालकरा
पृथुका प्रसूनसुकुमारवपुः ।
बहुयोधिनो बहुविधायुधिनः
समसूसुहत् सरलयैव दृशा ॥३०॥

सुषमाप्रवाहमधुरा मधुरा
पथि संवितीर्य सहसा सहसा
अखिलाखिशक्तिमुदिता मुदिता
चलिता तदैव चपलाऽचपला ॥३१॥

अथ रुक्मिणी सहचरीद्वितय-
सहगामिनी परमभक्तिमती ।
विहिताञ्जलिः क्षितिधरेन्द्रसुता
सदनं समेत्य किल तामनुवत् ॥३२॥

प्रकृतिः सती त्वमसि सत्त्वरज-
स्तमसां समानमिलनप्रकृतिः ।
अवबोधयत्तव महत्त्वमलं
मधुदङ्गसं सममवत् प्रथमम् ॥२३॥

पुरुषेण येन चिरयत्नवता
सकृदीक्षिता गुणवति ! प्रकृते ! ।
सविधं प्रयासि नहि तस्य पुनः
कुलकामिनीमनुकरोषि किमु ? ॥२४॥

प्रसुवत्यपि त्रिभुवनं पुरुषः
वक्षसि च सङ्गरहितास्यखिलम् ।
गुणवर्जितापि सगुणा प्रथमे
तव तत्त्ववित्र खलु कश्चिदपि ॥२५॥

जननि ! त्वया सचिवयाधिकृतात्
परमात्मनो वियदिदं समभूत् ।
अथ भूतमन्यदसुतश्च जगत्
त्वमतः स्मृताखिलजगज्जननी ॥२६॥

अथवा त्वमेव परमात्मतया
विदिता स्वशक्तियुगलाधिकृता ।
भजसीश्वरादिविविधामभिधां
सनपादपादिममितास्वरवत् ॥२७॥

विविधस्वरोच्चरितमन्त्रमयीम्
अवपुष्मतीं भगवतीं भवतीम् ।
स्वरलेशमप्यविदुषो विमतिः
गिरुरङ्गना ननु नुयात् किमियम् ? ॥३८॥

अयि कष्टकर्मरहितोऽखिलवित्
समयाविशिष्टविभवः पुरुषः ।
भवतीति ते सकलसिद्धिकर-
प्रणिधानयोग्य इह नैव जनः ॥३९॥

तव वाचकं प्रणवमात्रमहो !
महिमा तु तव वदितुं क्षमते ।
अपि नासि वाङ्मनसयोर्विषयः
तदियं नभःकुसुममेव नुतिः ॥४०॥

इति ते परस्परविभिन्नधियः
मुनयोऽम्ब ! रूपमनिरूप्यमिदम् ।
अशरीरमन्दमिव दूरगतं
स्वमनोऽनुरूपमसमं ब्रुवते ॥४१॥

रणभूः पुरा तव पदं स्पृशतो
दनुजद्रुता शिवमवाप यदि ।
सुरवैरिपाणिभयगाद्य तव
प्रपदं श्रिता, मम शिवं कुरुतात् ॥४२॥

तव सन्त्यनन्तकजगन्ति तनौ
न जहासि तानि गुरुभारधिया ।
सुमनो नितान्तमणु सन्निहितं
पटभारसात् किरसि किं विरसा ॥४३॥

मृदुबाल एव बलवानपि सः
कथमुत्तरेत् प्रचुरवीररणात् ।
विहरन् पुरन्दरदिगङ्कतले
तिमिराणि हन्ति नु कियन्ति रविः ॥४४॥

इह नो हरेद्यदुपतिर्यदि माम्
अथवा स्वगोत्तृपितचेदिपतिः ।
त्वमतः सतीत्वविगमात्र सती
शिरसां मणिः किमु पुरा व्यथसे ? ॥४५॥

पदपङ्कजं हरिरिह प्रददौ
इति भाषितं न खलु विभ्रमिमः ।
कमलाकरान्तरविहारिकरी
न करोति हृष्टिमपि हृष्टिजले ॥४६॥

अनुपागतं हरिमुपागमय
ननु शक्तिरूपवति ! भक्तिनतम् ।
कलहायमानमधितिष्ठ हरिं
विदर्भदुहितामिव पुरा समरे ॥४७॥

अनलानिलाम्बरधरासलिलं
सकलं किल त्वमसि देवि ! जगत् ।
अनुरूपरूपनिकरैरिमकैः
अनुकूलयस्व कुलकुण्डलिनि ! ॥४८॥

अतिचण्डचण्डहतिहेतुतमः
तव चण्डिमा भजतु चण्डि ! हरिम् ।
सुकुमारकूलनतनुः क्व हरिः
विकटा भटाः क्व च नु लौहघनाः ॥४९॥

लभतामजीवनिमसावसमः
कमितास्य मां विमतिचेदिपतिः ।
सवदक्षिणामपजिहीर्षुमलं
न जनङ्गमं प्रहरतीह हि कः ॥५०॥

जगदम्बिकापदसरोजयुगे
भ्रमरायितं विदधती हृदयम् ।
युगपद्वियादसुखमभ्यगता
सदगारतो विनिरगात् सुदती ॥५१॥

हरिरेष्यतीति महती मुदिता
क्षणमुग्रफुल्लवदना समगात् ।
कथमेष्यतीत्यतिविषादवशात्
मलिनानना च विकला न्यषदत् ॥५२॥

अभितो हृतापि हृतशस्त्रचयैः
विभयाञ्चकार पथि रक्षिभटैः ।
चलिता समेन च चलदगमना
विमना मनाक् स्त्रिमतीतवती ॥५३॥

चपलामिव प्रचलितामसुकीं
समबोधि नाप्यवस्थितः पुरुषः ।
सुषमा सुरा च रसगौरविणी
जनचेतनापहरणे सुसमी ॥५४॥

नृपकन्यकाहचिरतानुभवात्
जनचक्रमालिखितवद्विभौ ।
स्थलमीदृगध्वनि बभूव यथा
क्षितिपाति कस्तृणमपि व्यरणीत् ॥५५॥

हरिरन्तरेऽत्र समदं चकितं
सविग्रहमप्यनुरथं प्रचलन् ।
क्वचिदुज्झितध्वनि शनैः क्वचन
सजवं ययौ सदयनाभिमुखः ॥५६॥

पथिपार्श्वतः पथि रयोपहितः
रभसादुपेत्य घनसैन्यततेः ।
अनुतो रराज रजनीशकरे
इव दीपधामनि स नीलमणिः ॥५७॥

प्रयतो नरेन्द्रदुहिता सुहितं
सुचिरान्मनोरथशतेन रथे ।
चकिता विलोक्य किल विश्वसितुं
हरिरित्यसौ न सहसाऽसहत ॥५८॥

मिलनागमे नयनयोरनयो-
र्युगपन्मनो बलवदुच्छ्वसितम् ।
तटिनीप्रपातसमयेऽम्बुनिधौ
उभयोरिवार्मिजयमोघयुगम् ॥५९॥

चिरचिन्तितं हृदयदैवतवत्
पुरु रूपमङ्गमसेचनकम् ।
अवलोक्य लोचनसुधाञ्जनवत्
परिचिक्यतुः शुभतनूभुभयोः ॥६०॥

पलमात्रदृष्टिकलया सकलं
चिरजीवभावमितरेतरयोः ।
ययतुः स्म तौ हि निपुणं नयनं
यचलासगोचरमपि प्रयते ॥६१॥

गुणसंस्तवात् सुचिरमङ्कुरितः
सुदृशा समस्तमनुनेत्रगतः ।
उदितः क्षितौ हृदयराग इव
व्यानीत् प्रभामधरयोरुभयोः ॥६२॥

प्रथमायनीयालसमुग्धहरी-
प्रवमानदेहलतिका सरला ।
हरिमाधुरीसमुदयोपगमात्
उदतोलयल्ललितदण्डकरम् ॥६३॥

अथ यातिमञ्जुलममुं जगति
परिरभ्य साधकमभूत्रयनम् ।
किमहं अहः ? पुलकजालचितः
इति चिन्तयन्निव कयोऽभ्युदितः ॥६४॥

जगति तयोः सुषमयाऽसमया
विसमीक्षणाम् इतश्चितयतुरः ।
पुरयाविहत्य रथसन्मुखतः
स पुरःसरः समसरत् सरथः ॥६५॥

किमयं स्मरः ? स खलु पुष्पधनुः,
किमु वेदिराट् ? न तु सभाधिगतः ।
उत भूपतिः ? स किमु हन्ति निजान्
इममतर्कयन्निति जनाः कतिधा ॥६६॥

अथ कुञ्जपार्श्वमजिनं तस्मिन्
जितकाञ्चनाभरणकान्तिमणी ।
परिगृह्य विद्युतमिवाम्बुमुचः
पथमेतमां प्रियतमां स रथम् ॥६८॥

स्यन्दनोपरि परीतरुक्मिणो
रूपासंवलितकामनीयकम् ।
तप्तहेमनवनीलरत्नयोः
मिश्रितां श्रियमशिश्रियत्तदा ॥६८॥

परं परावर्त्त्य मताङ्गमिङ्गितात्
स दारुको दारुणवेगितं हरेः ।
प्रधिप्रमर्द्देन विमर्द्य पत्तपान्
अमान् युयुत्सून् सजवं ययौ ततः ॥६९॥

व्याहर्तुमध्य ननु पथ्यसमुत्तमेन
यावानभूत् किल मया समयोऽपनीतः ।
सञ्जीभवज्जनगणास्त्रविसर्गकाल-
सम्पादिते तु हरणे हरिणा न तावान् ॥७०॥

सुखं हरिर्वरगामिनीं जहार च
अथाप चापलकरणो भटानिमान् ।
ततो महाकलकलमाकुलीस्वना
सरिज्जलभ्रमिरिव साऽकरोच्चमूः ॥७१॥

हरिर्हरति रुक्मिणीं किमिति हन्त नः पश्यतां
हरिर्हरति रुक्मिणीं वदत तूर्णमुर्वीपतिम् ।
हरिर्हरति रुक्मिणीं किमु गताः क्व निस्पन्दताः ?
हरिर्हरति रुक्मिणीं निहत भिन्त रुन्धापतः ॥७२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिणीहरणं नाम त्रयोदशः सर्गः ॥०॥

हन्त भो यदि फणावतः प्रभोः
मूर्द्धरत्नमपहर्तुमर्हति ।
तुच्छजीवनजीनः स गच्छतु
मानहानिमलिनाननो बिलम् ॥५॥

पन्नगः खगपतेर्निपत्य चेत्
पक्षसञ्चितसुधाघटीं हरेत् ।
उच्छिनत्तु स वरं निजच्छदं
मज्जतु सुचिरं सरिज्जलम् ॥६॥

नाहरेत हरिणो हरेर्यदि
जाग्रतोऽपि रमणं रसक्रमः ।
मेधसं स मृगयन् मृगेन्द्रतां
संजहत्ववतु मन्दिरोन्दुरः ॥७॥

सन्निपत्य च पतङ्गपोतको
हेलिहानविपुलानलार्चिषम् ।
संग्रसेत्तु रसचरो भृशं
कोऽप्यचिन्त्यसमयोऽयमागतः ॥८॥

नीरधिं पिबति चेत् पिपीलिका
संभुनक्ति चटकोऽचलं च वा ।
नो तथापि शिशुपाललालसां
गोपभक्तहृतजीवनो हरेत् ॥८॥

मानहारिहरिहारितौजसः
संजहौ स जङ्गराजराजयः ।
अद्य रत्नमुकुटं कटुप्रभं
गौरवास्तनतमस्तकाद्द्रुतम् ॥१०॥

तेजसं ज्वलयते यमं मवा
सेकमेव तनुते तनूनपात् ।
अद्य भीष्मकसुतापहारतः
तव चित्रमपि सागरौकसः ॥११॥

लाघवाद्व्रजति सर्वमुच्चतां
गौरवाच्च ननु नीचतां पुनः ।
मानदण्ड इह सन्निदर्शनं
वस्तुतस्तु विपरीततराहवे ॥१२॥

नीलहस्तिरनिशं जलाश्रयः
मर्द्दितो व्रजति यस्तु मन्त्रताम् ।
तत्र को न कुरुते पदक्रमं
कर्दमं दलयते हि गौरपि ॥१३॥

गम्भदुर्मतिरतीवदुःसहः
प्राहतो द्विगुणमेधते तु यः ।
तं न मानयति को महस्विनं
पावकं वहति मूर्द्धनीश्वरः ॥१४॥

दारयन्नुरसि स्वसिद्धये
दूषयन्तमपि वा बिभर्त्ति यः ।
पादपातमरवं सहेत सः
भूमिरत्र नितरां निदर्शनम् ॥१५॥

कण्डूपचयसुखी हरिर्जटां
स्वां वमेत विलिखन्नमुन्दुरम् ।
मानहान्यशनिगीर्णवचसः
किं क्षमध्वमिह रुक्मिणीहरम् ॥१६॥

यः प्रतापयति तेजसा जगत्
तं दधाति शिरसा महानपि ।
भास्वतः सकलशैलशाखिनः
पादमुद्धरति फुल्लविग्रहाः ॥१७॥

अद्य राजतनयाग्निप्रभां
द्रागपाहरत कृष्णनीरदः ।
राजराजिवदनप्रदीपकं
सोऽन्धकारनिकरः समश्नुते ॥१८॥

यः स्वयं ज्वलति भूयसौजसा
नो सहायमयमर्थयेत् क्वचित् ।
काननं दहति जातवेदसि
मारुतो वहति पूर्वतोऽधिकम् ॥१९॥

यस्तु वा प्रणमति क्षितात्मना
त्वं लघुं निजजनोऽपि मुञ्चसि ।
ओघभग्नपतितं तटद्रुमं
संजहाति चिरसङ्गसस्तकः ॥२०॥

अर्थयस्युरसि साहसात् पदं
यो विकर्षसि पतन् द्रुमः स्वयम् ।
अन्तरेण कुपथं सहेत तं
को विवेचनविशुद्धिलक्षणः ॥२१॥

यद्य विद्युतितवैद्युतद्युतिं
मूर्तकीर्तिमिव रुक्मिणीं हरन् ।
वासुदेव यदि यादवो भजेत्
यान्तु तत् पुरत एव नोऽसवः ॥२२॥

लिप्सते मधुमदैर्यदि स्वयं
ध्वंसयत्यनुदितोऽपि तं सुहृत् ।
पूर्वपर्वतशिरस्तमोनुदि
नो गतेऽपि हरतेऽरुणस्तमः ॥२३॥

मानिनः परकृता तिरस्कृतिः
पीयते न बहुनाप्यनेहसा ।
दन्तघातकृतलक्षणं विधोः
लक्ष्यते तदधुनापि तुष्यवत् ॥२४॥

कामिनीमुपनिनाय केशवः
दर्पकस्तु नृपतीन् समाश्रयत् ।
कोपपावकभृतो महीभृतः
तापमाप विपुलन्तु चेदिराट् ॥२५॥

कृष्णनेमिपरिदीर्णवक्षसः
शेरते स्म भुवि पश्यता भटाः ।
दारुणामुरुमरुन्तुदव्यथां
संशुशोष दमघोषनन्दनः ॥२६॥

भीरुरत्नमधिगन्तुमिच्छतः
तस्य तत्र भजतोऽतिदुर्यशः ।
मागमूर्द्धमपिमुञ्चिहोर्षतः
दह्यमानवपुषो दशाभवत् ॥२७॥

सर्व एव कमनीयकम्यया
सङ्गतः सकललोकगीतया ।
लज्जते गुरुजनात् पुरा वसन्
चेदिपस्तु तदकीर्त्तिमालया ॥२८॥

उर्म्मिनां प्रतिमुखं क्व सुस्तुतिः
क्रोचकं रियमकीर्त्तिघोषणा ।
चिन्तयन्निति महाकुलः किल
चेदिभूपतिरभूत् क्रमोज्झितः ॥२९॥

## चतुर्द्दशः सर्गः ।

रुक्मिणीमहृत यादवः सुखम्
इन्यसौ गुरुमधीरतामगात् ।
स्वहृति स्वमभिपातुकां नदीं
मारुते किमुदधिर्धुवायते ॥४०॥

संज्वलन् किमपि भीषमौजसा
भीषयन्नुपगतावलाकुलम् ।
बिभ्रदुज्ज्वलसुरम्फदं हृदं
प्राक् परात् सम्भ्रमनह्यदञ्जसा ॥४१॥

स्वान्तिकादहितयामिसंग्रह-
तापतप्तमनसाऽथ रुक्मिणा ।
दन्तवक्रवचनानलैः पुनः
शुष्यमाणमनुपेति संजगे ॥४२॥

कर्म साधयितुमल्पमुद्यमी
भूरिशङ्कुरयिमृथ्यकारिता ।
गोष्पदं परितरीतुमीहते
कोऽब्धियोग्यजलयानयोजनम् ॥४३॥

मातुरङ्कमधिगम्य कौमुदीं
पाणिनेव शिशुको जिघृक्षति ।
अप्रभुत्वविरतः स्वयं पुनः
लुठति क्षितितलेऽपि तत्क्षणात् ॥४४॥

यादवापसदसादनक्रिया
साधनोद्यतवमेऽल्पके मयि ।
किं भवद्भिरचलाविचालनो-
त्तोलनचमतमैः समुत्थितम् ? ॥४५॥

अथ मे वत यथा नराधमः
नो भवत्सु तु तथापराध्यति ।
मर्कटो हि परित्यज्य वल्लरीं
स्वं दुनोति न वनान्तरद्रुमम् ॥४६॥

स्वैरगुल्सममयोपपालिनः
गोपरक्तनिजुषो जलौकसः ।
मीथयामि विशिखेन विग्रहे
विग्रहं विचलतोऽद्य सौव्यता ॥४७॥

सांख्यसम्मतचितो यथा नृपाः
अत्र कर्म्मणि चिरादुदासताम् ।
एवकः प्रकुरुते प्रधानवत्
सन्निधाननिपुणोन्नतः क्रियाम् ॥४८॥

छत्तछत्त्वशिरसः समुत्सर-
च्छोणितोचितभुवा सहाधुना ।
रागिणीं चितिश्वतामनीकिनीं
याद‍मेव विदधीय धामतः ॥४९॥

भीष्ममार्गणगणस्य यास्यतः
दुर्द्धरध्वननधूतचेतनम् ।
वीक्ष्यतामिह हरिं परिश्रम-
स्पन्दमुक्तदशनासदर्दुरम् ॥५०॥

भूभृतोऽथ समितं समेत्य भोः ।
केवलं भवत साक्षिणः क्षणम् ।
नैष वत्सककलङ्कितनभ-
मानिहत्य नगरे निवर्त्स्यति ॥५१॥

सोऽसुभिर्हरतु मेऽद्य रुक्मिणीं
तामहं तदसुभिर्न वाददे ।
दुर्यशःक्षितिरजोभिरुज्ज्वलं
जीवनं हि मलिनं विधीयते ॥५२॥

भाषमाण इति मण्डकाङ्कटः
दीर्घकम्पनयनेन तत्क्षणात् ।
सं हरन्स्थिरतनुर्व्यापयन्
क्षमहीदधिसमीनशायकः ॥५३॥

यावदुच्चरति खे जयध्वनिः
सिंहनादबधिरीकृतश्रुतिः ।
तावदेव स समाश्रयत् समं
स्यन्दनं निखिलहृष्टिहृष्टिभिः ॥५४॥

सत्पथे रथमयो सुसारथेः
श्चाश्रये व सितपीतपीतयः ।
चक्रपाणिमनु रुक्मिणो मनः
प्रायि जेतुमनसोऽत्यतत्वरन् ॥५५॥

पार्थिवस्य पृतनानुपातिनी
धीरनादमुखरा निरन्तरा ।
तां पुरःसरभगीरथामर-
निम्नगाश्रियमधिश्रियत्ततः ॥५६॥

दन्तवक्रशिशुपालपूर्वकाः
स्वस्वसैनिकनिकायसंहिता ।
भङ्गमेकमनुभङ्गवीचयः
वारिधेरिव समन्वगुर्नृपम् ॥५७॥

या प्रमोदलहरी विवाहजा
साधुना परमदारुणो रणः ।
आकुलाकुलकुलाङ्गनाकुलं
मन्दमन्दमगमद्गृहं क्रमात् ॥५८॥

आचकाङ्क्ष च जयं परं प्रिये
रुक्मिणीञ्च हरिहस्तगामिनीम् ।
दुर्घटं तदुभयन्तु चिन्तयन्
अन्वतप्त भृशमङ्गनाजनः ॥५९॥

भूरिवर्णशबला बलावली
गर्जनोर्जितपरस्वरा स्थिता ।
विद्युतेव विविधास्त्रलेखया
मेघराजिरिव गामपिप्रषत् ॥६०॥

उत्साहयन्तोऽतिमनांसि पुंसां
प्रध्वंसयन्तो द्विषसैन्यम् ।
तरङ्गयन्त्यम्बुदधेश्च सन्तः
सर्वे करैश्च नवाम्बुनादाः ॥६१॥

वीक्ष्य खसारमतिसाध्वसमाकुलन्ती-
संवेष्टिताङ्गलगतां पुरतः प्रलम्बे ।
सौदामिनीमिव घनाङ्गगतां सुमेरौ
रुक्मी तुतोष च करोष च योग्यताद्यः ॥६२॥

हरिरगणितसैन्यं धावदाक्रम्य भूमिं
हरिणगणसमानं विप्रकृष्टाद्विलोक्य ।
चकितचकितचित्तां सम्यगाश्वास्य कान्तां
झटिति चलमकार्षीत् सम्मुखे तं प्रताङ्गम् ॥६३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
प्रयाणं नाम चतुर्द्दशः सर्गः ॥१४॥

———:०:———

## पञ्चदशः सर्गः ।

बलोऽथ सबलो बालमनेकाक्रान्तमेककम् ।
उपलभ्य समालभ्य हलिं हालामदोऽभ्यगात् ॥१॥
अग्रे समग्रजं वीक्ष्य शुभ्रांशुमिव शुभ्रगुम् ।
आनन्दश्रीः श्रियः पत्युः समीव विद्युतितमाम् ॥२॥

पद्मबन्धः ।




( एष महापद्मादारभ्य दिग्दलेषु निर्गमप्रवेशाभ्यां विदिग्दलेषु तु क्वचित् प्रवेशेन क्वचित् निर्गमेन च अधस्तात् विन्यस्तः श्लोको भवति । )

सान्तताभागतासोम-भामाता मदमापता ।
तापमाप नता सेना नासेताहिततान्तता ॥३॥

विभक्ता परभाविन्या शून्यं सद्गुणिणो बलम् ।
असंख्यमेकरूपश्च येन आत्मानमव्ययम् ॥४॥
गजेन्द्रगमनाऽधीरा सुशुभा सा महोन्मदा ।
वाहिनी समसाक्रम्य दधाव परनायकम् ॥५॥
पदातिपोतिसम्पन्नाः सहसा रथिकुञ्जराः ।
अधावन्त हरिं मत्ताः सहसारथिकुञ्जराः ॥६॥
रामः सेनामुखे तिष्ठन् सेनां नानाविधायुधाम् ।
यथास्थानं समाविश्य समानगुणगौरवाम् ॥७॥
वार्त्तं वर्त्तां स्वयं लिप्सुरालोकलोललोचनः ।
चातकः शातकोऽरोणां सजलं जलदं यथा ॥८॥
कादम्बरीप्रियः प्रायात् कादम्बहरिणो हरिम् ।
कादम्बरेणुरोमाञ्चः कादम्बकधनुर्धरम् ॥९॥
गोमूत्रिकाबन्धः ।

| दो | प्र | णी | ला | व | ली | श्या | म | धा | म | स | न्तु | ट | ली | क | कम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| प | प्र | च्छ | ला | ङ्ग | ली | चे | मं | भू | म | द | न्तु | र | ली | क | कम् |

( प्रथमायाः पङ्क्तेः प्रथमाक्षरस्य, द्वितीयायाः पङ्क्तेः द्वितीयाक्षरस्य, प्रथमायास्तृतीयस्य, द्वितीयायाश्चतुर्थस्य इत्येवं क्रमेण पाठे प्रथमार्धम्, पुनः द्वितीयायाः पङ्क्तेः प्रथमाक्षरस्य, प्रथमायाः द्वितीयस्य, द्वितीयायास्तृतीयस्य प्रथमायाश्च चतुर्थस्य अक्षरस्य एवं क्रमेण पाठे द्वितीयार्धं सम्पद्यते । तेन भाव्यं श्लोकः । )

दो प्र णी ला व ली श्या मं धा म स न्तु ट ली क कम् ।
प प्र च्छ ला ङ्ग ली चे मं भू म द न्तु र ली क कम् ॥१०॥

बलरामात् सरामः स क्रियाननमनीनमत् ।
मनस्वी विघ्ननिघ्नोऽपि विनयं न जहाति हि ॥११॥

ऊचे शौरिररीन् हन्तुः सर्वं मङ्गलमङ्ग ! मे ।
पश्यतोऽर्थ्यमपश्वार्थं कस्य नश्यति नाशुभम् ॥१२॥

सह तेन समुद्युक्तः समिते समयादरम् ।
सहते न समुद्युक्तः समिते समयादरम् ॥१३॥

समुद्गयमकम् ।

प्रागङ्गाय नृपो गृह्णन् सज्जं कोदण्डमण्डलम् ।
रुक्मिणीजानये बाणं पत्रवाण द्रुवाकिरत् ॥१४॥

त्रासयन्नहितानीकं पूरयन् विदिशो दिशः ।
दारयन् रन्ध्रमद्रीणां सिंहनादं ननाद च ॥१५॥

चिरं चारुरुचा रोची विभवी विवभौ विभुः ।
कोपपाकाकपः कोऽपि चलाचलोऽचलाचलः ॥१६॥

द्व्यक्षरपादः ।

विविद्वान् युद्धविद्वान् स प्रजिहीर्षुं हरिं हली ।
दन्तवक्रं प्रभुक्रोध कः क्षमः क्षमते खलम् ॥१७॥

विशेषविषयः सोऽथ कालिन्दीभेदनोऽभिनत् ।
खड्गैः खगेशवेगैः स्तम् उत्सर्गमिव बाधकः ॥१८॥

उपासङ्गो द्विधा चक्रे चक्रेण चक्रपाणिना ।
विप्रकृष्टः समाकृष्टः पाशेन पशुवत् परः ॥२७॥
सहस्रकिरणाकारं सहस्रारकारिणम् ।
दुर्दर्शं तं ददर्शाये हरिं हरिणलक्ष्मणः ॥२८॥
दीनरावती वारि रामाला नहदाहवा ।
वाहदाहनलामारा रैवातीनवरा नदी ॥२९॥

श्लोकप्रतिलोमयमकम् अथवा गतप्रत्यागतम् ।

विदर्भभूपतिः पश्यन् भज्यन्तीं स्वामनीकिनीम् ।
मधुद्विषं विदिदेष मत्ताडिपमिव द्विपः ॥३०॥
सपत्त्रा विपुलाभासा सशिखा विशिखावली ।
मुक्ता तेन हरेः कण्ठेऽकुण्ठमापतदुन्नता ॥३१॥

स न मा लि का य पा तो
न या नि पि त जो व पा ।
मा नि ता ता ता पा जो य
लि पि त । द्रु क ला त ता ॥३२॥

पद्मबन्धः । गुप्तकम् ।

गुप्तेन सह यविलप्ता ध्यानमूर्त्तिः शरैर्हरेः ।
तस्थाय सह रामेण केशयोऽप्योहवन्महः ॥३३॥
धामसं दूरसञ्चारं सुदुर्दर्शं सुदर्शनम् ।
चालोकनुममन्वर्थि-प्रकाशं स समग्रहीत् ॥३४॥
भीतानां तरसाधारं तरसा धारयन् हरिः ।
द्विपतस्तु महमाधिप्यं महमाधिप्य तदहृगः ॥३५॥

पादाद्यन्तयमकम् ।

पश्चात्तवपुष्कः क्षिप्रं चञ्चलाङ्गद्युतिश्रितः ।
गम्भीरगर्ज्जनः शत्रून् जलदश्च जिगाय सः ॥५२॥

चन्द्रहासेन तेनाथ ते नाथकुलपालिनाः ।
पाल-शाल्मल-निर्घृणाः निर्घृणाः पेतुराहताः ॥५३॥

हली समाहतस्तेन तेने तेजस्विनां पृथुम् ।
लोलोलयति कल्लोलान् वातधुतः किमर्णवः ॥५४॥

सोऽधुदेवनरत्नाभं विशालं लोललोचनम् ।
प्रभात एव शोणाङ्गं रोषात् सुरक्षतां ययौ ॥५५॥

दन्तवक्रं क्रमात् क्रामन् हलभृत् स हलाग्रतः ।
मुषलेन समर्द्दीत् महारोहतसुहतम् ॥५६॥

पतालव्य· ।

प्रहृतः कोऽपि निःसंज्ञः संवुवुः सुराङ्गनाम् ।
विलोक्यैव लब्धसंज्ञः रथी प्रवहते पुनः ॥५७॥

निहतात्मजसोदर्यो धैर्यमाधाय धीरधीः ।
शस्त्रपाणिः सीरपाणिं ययौ यमभिवापरः ॥५८॥

कुण्डली हलिनो भीतः खगेशादिव कुण्डली ।
वेगवान् शाहतः क्वचित् बभूव रन्ध्रवेशवान् ॥५८॥

शस्त्रायस्ति महोत्साहैः हस्ताहस्ति नखानखि ।
ववृधे तुमुलं जन्यं सेनयोरुभयोरलम् ॥६०॥

हत्वासन्नान् स शस्त्रेण शत्रून् अस्त्रेण दूरगान् ।
समीपविप्रकृष्टानाम् अभवत्तुल्यदारुणः ॥६१॥

समस्ता रिपुसेनास्ता रामास्त्राशुगसंहृताः ।
दूर्वा इव बभुः प्रातः शिरःशिशिरशीकराः ॥६२॥

दयावान् स बली भग्नान् दलनायाततानवान् ।
संयमज्ञं लोलच्छदः भटान् लग्नान् व्यनीनशत् ॥६३॥

गूढप्रथमपादः ।

पलायामासिरे सेना मूर्च्छां नीते कराहते ।
भास्वता दन्तवक्त्रेऽस्मिन् लोमे तारा इव प्रगे ॥६४॥

भङ्गनालिङ्गिताङ्गं तं गोविन्दमिन्दुसुन्दरम् ।
तदा बलोऽवलोक्यैव शिश्राय विजयश्रियम् ॥६५॥

रोचनस्तेजसा शौरिः मध्यन्दिनविरोचनः ।
रोचनश्रीस्तताडारीन् नेत्रनन्दितरोचनः ॥६६॥

रुक्मी प्राणपणोद्योग-महोत्साहसहोऽपि सन् ।
नात्येतुमच्युतं सेहे प्रतिकूलं यथा विधिम् ॥६७॥

सूतं जघान चिच्छेद ध्वजं सह जयाशया ।
बिभेद च शरैः शौरिः युगपद्धर्म रुक्मिणः ॥६८॥

विलोक्योच्चूर्णिं योद्धृणां दुर्नीतिं नेतुरीदृशीम् ।
चेतो विपेदे निःश्रेयसि-स्थितीनां दुःस्मृतिश्रिति ॥६९॥

निरौष्ठ्यः ।

जेतुं अथ निषेधूणां सुहृद्रापततां हरेः ।
परे पुरःसरीभूय दुद्दुद्दं तमाह्वयात् ॥७०॥

विनेशुः सैन्यसेनान्यः सहायस्तु पराजयः ।
स्मरन्निति स निर्विण्णः सासिरासीदगतो रथात् ॥७१॥

विद्धाङ्गं स वपुः पातिशिलीमुखकदम्बकम् ।
मङ्क्षिवागात् क्ष्मां स-शिलीमुखकदम्बकम् ॥७२॥

चिच्छेदागच्छतस्तस्य निशातशरसञ्चयैः ।
मुष्टौ रिष्टिमरिष्टारिः रुक्मिणो रुक्मपुङ्खकैः ॥७३॥

गदाधरं दधावाथ गदामादाय दारुणाम् ।
शतमाधावधूतोऽपि कार्य्याद्भ्राम्यति नोद्यमी ॥७४॥

लोललोलाललो लीला-लालो लोलालिलोलल: ।
लोलिलालो लालला: लोललोलोऽललालल: ॥७५॥

एकाक्षरपादः ।

माधवस्तां निकृत्याराात् चक्रेणाक्रम्य तं गले ।
सन्न्यस्य धनुषोऽग्रेण च्छेत्तुं निस्त्रिंशमाददे ॥७६॥

युग्मकम् ।

पाणावुन्मिते तस्मिन् चन्द्रबिम्बानुबिम्बितः ।
चन्द्रहासो जहासास्य रथे चन्द्र इवापरः ॥७७॥

सुवर्णभूषिता साऽलं नाथस्य करमाददे ।
सुवर्णभूषिता सालं लतेव नृपजाकुला ॥७८॥

रामोऽथ दूरतो वीक्ष्य तत्क्षणादेत्य तत्पुरः ।
समयोचितमत्युग्रम् अवोचदच्युतं वचः ॥७९॥

मानिनो माननाशः स्यान्मृत्युः प्राणनाशकः ।
तुल्या दशैव तिग्मांशोरस्ते चाभ्युदितेऽस्तते ॥८०॥

क्षमाभावः परं जाड्यं प्राणमोक्षो महोशयः ।
पारवश्यं परं दुःखं लोणोऽजःमवयोर्भुवि ॥८१॥

महान् खल्वपकर्तॄणां दयते तु छिनत्ति न ।
यमते न दधात्येव स्वां खनन्तमपि क्षितिः ॥८२॥

उपकारः प्रतीकारः महीयानपकारिषु ।
प्रभूतिन्धनदानेन ज्वलनो हि प्रशाम्यति ॥८३॥

चिरसं तल्लोहदीमं विरसं पवनं यथा ।
सदनं यातयानेव मदनं प्रति गम्यताम् ॥८४॥

भवसेनं क्षुरप्रेण मुण्डयित्वा विसर्जय ।
भवमिव वधः प्रोक्तः पश्यस्यालोकसम्भवः ॥८५॥

अभिषिक्तो वियोक्तव्यः नाम्बुभिर्व सुधेयिता ।
विशेषतस्तु सम्बन्धी स्वसासमा च सादिनो ॥८६॥

इति न्यायस्य आदेशात् विमुखोऽभूत् स तद्वधात् ।
नहि लङ्घयते धीमान् पूज्यं पूजितसद्गुणः ॥८७॥

अमूर्षन्यः ।

केशपाशं हृषीकेशः लुलुवे तस्य कुञ्चितम् ।
मानहानेर्भी भूमौ पुञ्जीकृतमिवायशः ॥८८॥

जीवन्मुक्तः परोद्योगात् भट्टाहेश्वानयम् ।
पुनर्नारायणी योक्तुं न पुनः प्राविशत् पुरम् ॥८९॥

प्रायोपवेशनं चक्रे व्यात्मा पुरतोऽन्तरे ।
आलोचयदवस्थां ताम् व्यात्मा पुरतोऽन्तरे ॥९०॥

स्वपुरं प्रति दारुके रथं
सरवं प्रेषयति प्रहृष्यति ।
स सितस्मितराजिताऽधरे
नलिने वा नलिनं दधेऽधरम् ॥९१॥

सम्पदो विजयिनीमनीकिनीं
द्वारकापथमथापि सा समम् ।
सोऽपि तत्र निखिलान् खलान् खलु
व्यानयो व्रजपतो समत्वरम् ॥९२॥

# षोडशः सर्गः ।

—:०:—

धाम निजं प्रथमेऽथ रमेशे
ग्रामश्रमि स्वनितादपि नृणाम् ।
कृतमहारिहरीक्षणजन्मा
तुङ्गतमः प्रमदः प्रबभूव ॥१॥

सिक्तसुमृष्टमहापथसार्थैः
केतुगणैर्धृतचित्रपताकैः ।
मत्यलसच्च चलत्सुममाल्यैः
भीष्मकजामिव वीक्ष्य पुरन्ध्रीः ॥२॥

यत्र समजं यदेकसमीके
लोकललाममसमं द्वितयं सः ।
तत्र चलाप्यचला कमलाभूत्
कीर्त्तिरितीव निरीक्ष्य जनासीत् ॥३॥

भीष्मकजां सुरवैरिविहारात्
कान्तिमतीमवलोक्य नितान्तम् ।
द्वारवती सुपुरी पुरुरूपैः
मत्सरिणी चकितेव चकाशे ॥४॥

स्रोच्कलिका किमु पुञ्जितकान्तिः ?
चन्द्रविभा किमु मूर्त्तिमती वा ।
देहमिता नु सुधा वसुधायां
तामिति वीक्ष्य जनैः समतर्कि ॥५॥

नीलमणिर्विमलो वनमाली
स्वर्णमयीयमपि प्रियदृष्टिः ।
दैवकृतो मणिकाञ्चनयोगः
एवक इत्यमलापि च लोकैः ॥६॥

श्रेणिकृता प्रमदा प्रमदाली
नव्यवधूं व्यवधूय नरौघम् ।
स्वैरमुलुध्वनिनाऽध्वनि नाम
घोषयितुं सहसा सहसायात् ॥७॥

सान्द्रमुदा नगरी लहरीभिः
भूरिरवा समभा महतीभिः ।
तुङ्गतरङ्गततिं सरिदीशम्
न्यक्करोदिव सा ध्वनिसाध्वी ॥८॥

राक्षस एव भवेन्नु विवाहः
दानविधिं न विधिर्विदधीत ।
चिन्तयतीत्यमितो वसुदेवे
दैववशादृष्टमो ध्वजमारात् ॥९॥

ईदृशमाशु मना वसुयोगं
संविदधन्नभते वरपात्रम् ।
मत्तनयामनयत् स्वयमेष:
यन्नु विभो ! किमितो मम भाग्यम् ॥२०॥

सत्कुलशीलवराय वराय
शोभतिमान् प्रददत्तनयां कः ।
धूर्जटये तनुजां प्रतिपाद्य
नूनमभूद्गिरिराडतितुङ्गः ॥२१॥

विष्णुपदादभवत् पतिता सा
त्रिष्णुपदो भुवनानि पुनाना ।
हे पवितुं स्वकुले पुनरेषा
विष्णुपदं समगादतिदीना ॥२२॥

याचितुते तनया स्वयमेव
काम्यवरो यदि को नु निषिध्येत् ।
गच्छतरुं व्रततीं निपतन्तीं
को हि मृदुं विभजत्यतिबाल्यः ॥२३॥

जीवजनस्पृहणीयमिवेह
सद्म वरं तनुजेव च विद्या ।
सम्भवते यदि शक्तिवशेन
प्रीतिमयानि जगन्ति तदा स्युः ॥२४॥

सद्वतामनुमत्यनुवर्त्ती
दातुमिमां मिथवेऽहमुपेतः ।
दानमृते परकीयपदार्थे
स्वत्वमुदेति नहि ग्रहमावात् ॥२५॥

स्नेहयुतां मधुरं स्मितियुक्ताम्
भ्रातुरिमव परामिव कन्याम् ।
श्रीहरये शुचये शुचये वा
सम्भवितास्मि दददवरितार्यः ॥२६॥

जानति तामनुजानति तस्मिन्
उत्सवमेनमपि प्रतिभत्यान् ।
संवहथे स च तस्य निदेशात्
सिन्धुतरङ्ग इवानिलतुषः ॥२७॥

दुर्हं मदार्णवे रिपिताऽयम्
आपतितः सहसा कथमेकः ।
हारयतीजमसंशय एव
साक्रमरं रविणाऽगमदस्ताम् ॥२८॥

सौरभमूर्द्धनि शून्यनिवेशा
दीपततिर्विशदा त्रिकमन्ती ।
दीपमुदस्य प्रदीपमशेषं
लोकदृशि प्रगुणं प्रणिनाय ॥२९॥

वातचला प्रतिहारपताका
दीपशिखां लुनती किल काश्चित् ।
संज्वलिता परयेति निरीक्ष्य
द्राङ् निरवाप्यत केनचनेत्थ ॥३०॥

उच्चशिरःसु कलङ्कितचन्द्रः
न्यस्यति पादमितीव समन्युः ।
सौधगणोऽपि स सर्वशुचिस्तम्
अस्पृशदुज्ज्वलदीपकपादैः ॥३१॥

नूत्नमहाद्युतिरत्नजभूरि-
भूषणभूषितमञ्जुलवामा ।
श्रेणिगताऽट्टशिखासु दिदृक्षुः
व्योम्नि धनुर्व्यतनोदिव जिष्णोः ॥३२॥

मङ्गलगीत्युलुलुध्वनिवाद्य-
वेणुरवा लयतालसमेताः ।
ऐक्यगता इव सुश्रवणीयाः
लिल्युरुदन्वति खे विचरन्तः ॥३३॥

दान-सभाजन-देवन-मानाः
स्पर्शन-दर्शन-भाषण हर्षाः ।
हास-विकास-विलास-विहाराः
तन्नगरीगरिमाणमतन्वन् ॥३४॥

मञ्जुलसज्जितनागरनारी
मन्दिरचत्वरमभ्यतिफुल्ला ।
कृष्णपुरःसरभीष्मककन्यां
तां वसुदेवगिरोपनिनाय ॥२५॥

पर्वणि चन्द्रमसः सुषमेव
पङ्कजिनीव शरद्यपनिद्रा ।
सम्मथने जलधेव सुधेव
लोकदृशः समतोषयदेषा ॥२६॥

सम्मदपूरविपूरितचेताः
ह्रीविनतो बहिरच्युत आसीत् ।
एष निसर्गनयश्चतुरस्य
सन्निहितस्य हि दारगुरूणाम् ॥२७॥

प्रीतिविकासि मनस्त्वरते च
वारयते च पुनर्गुरुलज्जा ।
आलिबलं प्रथियासयते च
विक्लवतामिति सापि जगाम ॥२८॥

भीष्मकजाऽच्युतयोर्युगलेऽस्मिन्
पीठमुपाश्रयति श्रितपाणौ ।
शान्ततडिन्नवनीरदकान्तो
शोभयदेव तमा भुवनेऽस्मिन् ॥२९॥

स्वेदबिन्दुशाक्तकरणोजनहस्तात्
सुस्मितश्लक्ष्णमौक्तलाजाः ।
विश्वगिवान्तिकसौधशिरस्तः
पुष्पकुटस्य यशांसि पतन्तः ॥४०॥

द्वावपि लोकयितुं मनुजानाम्
आपततां विफलाऽभवदाशा ।
एकतरं खलु दृष्टुं निपतन्ती
येन ततोऽतितरा न निवृत्ता ॥४१॥

साक्षिणा हिमगिरेश्च जगत्याः
साङ्गविधानपरोऽथ पुरोधाः ।
रागसुखेन तयोः सह साम्निः .
अग्निसभा समजिज्वलदुच्चैः ॥४२॥

उद्यमिताधुमचन्द्रिकयाऽथ ते
निरिक्षितिपसौऽखिललोकाः ।
सम्भुखराजितिरस्कृतगात्राः
संदद्युस्तु वहिष्कृतवक्त्राः ॥४३॥

स स्तिमितोऽस्थिरताप्रतिपाद्य-
क्षोभपदेऽपि बभूव समाजः ।
कस्यचिदुत्सवे करणस्य
सन्निभृतान्यपराणि भवन्ति ॥४४॥

तत्र परस्परवक्त्रमवेक्ष्य
तौ सुतरामवशेन्द्रियसार्थौ ।
बद्धपरस्परलोचनपद्मौ
प्रीतिरियं क्रियतीति न बुद्धौ ॥४५॥

मातृसुभाविततरेतरकान्ति-
राशिविलग्नविलोचनयुग्मम् ।
स्पन्दनहीनतनू प्रतिपन्नं
मीकतुल्यमसौ न मुहूर्त्तम् ॥४६॥

रूपसुधोदधिदूरनिमग्न-
नेत्रयुगौ स्वगतभ्रमसारौ ।
सर्वमिति जगतां नहि किञ्चित्
न स्म विलोकयतो न च वित्तः ॥४७॥

आसीनौ कनकासनेषु सुमुखौ प्रत्यङ्मुखौ प्रीतिमान्
राजा हारमनीश्वराय हरये प्रागाननायार्पयन् ।
उत्कण्ठाकुललोकलोचनकुलैरालोक्यमानामदात्
पुण्यं विश्वगुरोर्गुरुत्वममलं प्रत्यग्रमभ्यग्रहीत् ॥४८॥

लोकानां विकसोल्लासस्तुतिकुलैरानन्दकोलाहलैः
नानानादसमेधितैः सुमधुरं गानं वधूनां जितम् ।
तूर्णोद्धूतनिजाननैर्जनगणैरुत्कर्णमाकर्णितं
संधावज्जनतान्तरादपि तयोर्दृष्टं चिरेष्टं मुखम् ॥४९॥

चित्रालापाद्युररसरणाः कृष्णमुत्प्रासमुग्धं
हेलालोम्ना नवयुवतयो रुक्मिणीं क्रीडिनम्राम् ।
भूयःस्वामोद्भितकलकलाक्रान्तकर्णं विकर्णौ
पुष्पासारैः प्रतितनु गरङ्गं निन्यिरेऽन्योन्यलग्ना. ॥५०॥

सम्यौं लक्ष्मीमिवासौं सुकृतमतिकृती भीष्मकः पौरलोकः
भाग्यालीलासमेषां मुदमुदवसितं सर्वमेकान्तकान्तिम् ।
कृष्टार्थं प्रार्थि सार्थौ मुदितयदुपतेरन्नमन्त्राभिलाषी
शान्तिं लेभे तदानीं जगदपि लभतामेवमेवाधुनापि ॥५१॥

घोरीकुलोद्भवमहम्मदनामधेयः
दिक्षौं विजित्य जितवानपि कान्यकुब्जम् ।
एकां कलामिव विधोरपरां गृहीता
स्वर्भानुराधित तमोऽखिलभारतेऽस्मिन् ॥५२॥

ततस्तदुत्पीड़ितकान्यकुब्जतः
श्रीराममिश्रः सह भार्यया त्वजः ।
विरश्चिषन् धर्ममुदस्तुसम्बलः
पूर्व्वं नवद्वीपमियाय काश्यपः ॥५३॥

तदात्मभूमाधवमिश्रऐहज-
गोपालपुत्रो गणपत्युदीरितः ।
तदात्मजस्तात्रयतः समातनः
कोटालिपाड़े पुनरागमत्ततः ॥५४॥

गुणार्णवो नाम गुणी तदात्मजः
पुरन्दराख्यं समजीजनत् सुतम् ।
सुपण्ड्यसौ पञ्च सु मुण्डमालिनीम्
प्रतिष्ठिपच्चोनशियापुरे निजे ॥५५॥

श्रीनाथो यादवानन्दो मधुसूदन एव च ।
वागीशश्चेति चत्वार आसन् पुरन्दरात्मजाः ॥५६॥

चूडामण्युपनामासीत् श्रीनाथो विबुधाग्रणीः ।
सुधीरो यादवानन्दो न्यायाचार्य्यत्युपाधिमान् ॥५७॥

अद्वैतसिद्धिमुखग्रन्थप्रणेता
संक्षेपशारीरकभाष्यकर्त्ता ।
योगी महस्वी मधुसूदनः स
सरस्वतीं सम्भृतवानुपाधिम् ॥५८॥

गौरीदासो यादवानन्दसूनुः
गोविन्दाख्यः साग्निकस्तत्सुतोऽभूत् ।
सत्तेजस्वी सद्यशस्वी मनस्वी
तस्याप्यासन् सप्त पुत्राः पवित्राः ॥५९॥

तद्द्वितीयतनयो बलरामः तर्कभूषणमुपाधिमुपेतः ।
चारुधीश्चतुरथस्तु तोऽसौ आत्मजानजनयद्विजरत्नान् ॥६०॥

लक्ष्मीनारायणो ज्येष्ठो हरिनारायणोऽपरः ।
पुरुषोत्तम इत्यन्यो रामदासश्च शेषजः ॥६१॥

विद्यालङ्काराभिधो रामदासः
सत्पुत्रोऽभूत् रुक्मिणीकान्तनामा ।
गौरीनाथो देहजस्तस्य जातः
राधानाथोऽप्यस्य सूनुः सुविज्ञः ॥१२॥

काशीचन्द्रस्तस्य पुत्रोऽतिविद्वान्
लोकख्यातो नाम वाचस्पतीति ।
भूरिज्ञानं यस्य वीक्ष्यातिसूक्ष्मम्
धन्यो व्यासोऽमन्यतान्यास्थलोकैः ॥१३॥

गङ्गाधरः प्रथमजः प्रथितस्तदीये
पुत्रत्रये बुधगणप्रवरः पिता मे ।
दाति शवतुसरवयाः खलु पूर्णिमायां
चन्द्राग्निनागविधुमानशकाब्दमाघे ॥१४॥

कोटालिपाड़नगरीनगियानिवासी
मन्दात्मनापि कविलभ्ययशोऽभिलाषी ।
भूभृच्छिलक्षयिसुपक्ष_समानधर्मा
श्रीमानिदं रचितवान् हरिदासशर्मा ॥१५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विवाहो नाम षोड़शः सर्गः ॥०॥

—:०:—

समाप्तमिदं रुक्मिणीहरणम् ॥०॥